# MATRICULATION
# SANSKRIT SELECTIONS

*REVISED EDITION*

UNIVERSITY OF CALCUTTA
1949

# सूचीपत्रम्

## गद्यांशे

पद्यांशे

# प्रवेशिका

## अभिषेक-नाटकम्

### विभीषण-रावण-हनूमत्-संवादः

(ततः प्रविशति विभीषणः)

विभीषणः। (सविमर्शम्) अहो नु खलु महाराजस्य विपरीता खलु बुद्धिः संवृत्ता। कुतः

मयोक्तो मैथिली तस्मै बहुशो दीयतामिति।
न मे शृणोति वचनं सुहृदां शोककारणात्॥

(उपेत्य) जयतु महाराजः।

रावणः। विभीषण! एह्येहि। उपविश।

विभीषणः। एष एष उपविशामि। (उपविशति)

रावणः। विभीषण! निर्विण्णमिव त्वां लक्षये।

विभीषणः। निर्वेद एव खलु अनुक्तग्राहिणं स्वामिनमुपाश्रितस्य भृत्यजनस्य।

रावणः। छिद्यतामेषा कथा। त्वमपि तावद् वानरमानय।

विभीषणः। यदाज्ञापयति महाराजः। (निष्क्रान्तः)

(ततः प्रविशति राक्षसैर्गृहीतो हनूमान्)

सर्वे। आः इत इतः।

हनूमान्। (उपगम्य) भो राजन्! अपि कुशली भवान्?

रावणः। (सावज्ञम्) विभीषण! किमस्य तत् कर्म?

विभीषणः। महाराज! अतोऽप्यधिकम्।

रावणः। कथं त्वमवगच्छसि?

विभीषणः। प्रष्टुमर्हति महाराजः 'कस्त्वमि'ति।

रावणः। भो वानर! कस्त्वम्? केन कारणेन धर्षितोऽस्माकम् अन्तःपुरं प्रविष्टः?

हनूमान्। भोः! श्रूयताम्—

अञ्जनायां समुत्पन्नो मारुतस्यौरसः सुतः।
प्रेषितो राघवेणाहं हनूमान् नाम वानरः॥

विभीषणः। महाराज! किं श्रुतम्?

रावणः। किं श्रुतेन।

विभीषणः। हनूमन्! किमाह तत्रभवान् राघवः?

हनूमान्। भोः! श्रूयतां रामशासनम्।

रावणः। कथं कथं रामशासनमित्याह! आः हन्यतामयं वानरः।

विभीषणः। प्रसीदतु प्रसीदतु महाराजः। सर्वेष्वपराधेषु अवध्याः खलु दूताः। अथवा रामस्य वचनं श्रुत्वा पश्चाद् यथेष्टं कर्तुमर्हति महाराजः।

रावणः। भो वानर! किमाह स मानुषः?

हनूमान्। भोः! श्रूयताम्—

वरशरणमुपेहि शङ्करं वा प्रविश च दुर्गतमं रसातलं वा।
शरवरपरिभिन्नसर्वगात्रं यमसदनं प्रतियापयाम्यहं त्वाम्॥ इति।

रावणः। ह ह ह!

हनूमान्। एवंविधेन भवता किमर्थं प्रच्छन्नं तस्य दारापहरणं कृतम्?

विभीषणः। सम्यगाह हनूमान्।

रावणः। विभीषण! किं विपक्षपक्षमवलम्बसे?

विभीषणः। प्रसीद राजन्! वचनं हितं मे प्रदीयतां राघव-धर्मपत्नी।
इदं कुलं राक्षसपुंगवेन त्वया हि नेच्छामि विपद्यमानम्॥

रावणः। विभीषण! अलमलं भयेन।

कथं लम्बसटः सिंहो मृगेण विनिपात्यते?
गजो वा सुमहान् मत्तः शृगालेन निहन्यते?॥

हनूमान्। भो रावण! विपद्यमानभाग्येन भवता किं युक्तं राघवमेवं वक्तुम्?

रावणः। हन्यतामयं वानरः। अथवा दूतवधः खलु वचनीयः। शङ्कुकर्ण! लाङ्गूलमादीप्य विसृज्यतामयं वानरः।

शङ्कुकर्णः। यदाज्ञापयति महाराजः। इत इतः।

रावणः। अथवा एहि तावत्।

हनूमान्। अयमस्मि।

रावणः। अभिधीयतां मद्वचनात् स मानुषः—

अभिभूतो मया राम! दारापहरणादसि।
यदि तेऽस्ति धनुःश्लाघा दीयतां मे रणो महान्॥

---

# पञ्चतन्त्रम्

## पञ्चतन्त्र-कथामुखम्

सकलार्थशास्त्रसारं जगति समालोक्य विष्णुशर्मेदम्।
तन्त्रैः पञ्चभिरेतच्चकार सुमनोहरं काव्यम्॥

अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम्। तत्र सकलार्थिसार्थ-कल्पद्रुमः प्रवर-नृप-मुकुट-मणि-मरीचिचय-र्चचित-चरणयुगलः सकलकलापारं गतोऽमरशक्तिर्नाम राजा बभूव। तस्य त्रयः पुत्राः परमदुर्मेधसो वसुशक्तिरुग्र-शक्तिरनेकशक्तिश्चेतिनामानो बभूवुः।

अथ राजा तान् शास्त्रविमुखानालोक्य सचिवानाहूय [प्रोवाच—भोः! ज्ञातमेतद् भवद्भिर्यन्ममैते पुत्राः शास्त्रविमुखा विवेकरहिताश्च, तदेतान् पश्यतो मे महदपि राज्यं न सौख्यमावहति ; अथवा साध्विदमुच्यते—

"अजातमृतमूर्खेभ्यो मृताजातौ सुतौ वरम्।
यतस्तौ स्वल्पदुःखाय यावज्जीवं जडो दहेत्॥
कोऽर्थः पुत्रेण जातेन यो न विद्वान् न भक्तिमान्?
किं तया क्रियते धेन्वा या न सूते न दुग्धदा?"

तदेतेषां मम पुत्राणां यथा बुद्धिप्रकाशो भवति, तथा कोऽप्युपायोऽनुष्ठीयताम्। अत्र च मद्दत्तां वृत्तिं भुञ्जानानां पण्डितानां पञ्चशती तिष्ठति, ततो यथा मनोरथाः सिद्धिं यान्ति, तथानुष्ठीयतामिति।

तत्रैकः प्रोवाच—देव! द्वादशभिर्वर्षैर्व्याकरणं श्रूयते, ततो धर्मशास्त्राणि मन्वादीनि, अर्थशास्त्राणि चाणक्यादीनि, कामशास्त्राणि वात्स्यायनादीनि, एवं च ततो धर्मार्थकामशास्त्राणि ज्ञायन्ते, ततः प्रतिबोधनं भवति।

तन्मध्यतोऽपरः सुमतिनामा प्राह—अशाश्वतोऽयं जीवितव्यविषयः, प्रभूत-कालज्ञेयानि शब्दशास्त्राणि, तत् संक्षेपमात्रं शास्त्रं किञ्चिदेषां प्रबोधनार्थं चिन्त्य-तामिति ; उक्तं च—

"अनन्तपारं किल शब्दशास्त्रं स्वल्पं तथायुर्बहवश्च विघ्नाः।
सारं ततो ग्राह्यमपास्य फल्गु हंसैर्यथा क्षीरमिवाम्बुमध्यात् ॥"

तदत्रास्ति विष्णुशर्मा नाम ब्राह्मणः सकलशास्त्रपारंगमश्छात्रसंसदि लब्धकीर्तिः, तस्मै समर्पयत्वेतान्, स नूनं द्राक् प्रबुद्धान् करिष्यतीति।

स राजा तदाकर्ण्य विष्णुशर्माणमाहूय प्रोवाच—भो भगवन्! मदनुग्रहार्थमेतानर्थशास्त्रं प्रति द्राग् यथानन्यसदृशान् विदधासि, तथा कुरु; तदहं त्वां शासनशतेन योजयिष्यामि।

अथ विष्णुशर्मा तं राजानमूचे—देव! श्रूयतां मे तथ्यवचनम्; नाहं विद्याविक्रयं शासनशतेनापि करोमि, पुनरेतांस्तव पुत्रान् मासषट्केन यदि नीतिशास्त्रज्ञान् न करोमि, ततः स्वनामत्यागं करोमि। नाहमर्थलिप्सुरेवं ब्रवीमि; यतो ममाशीतिवर्षस्य व्यावृत्तसर्वेन्द्रियार्थस्य न किञ्चिदर्थेन प्रयोजनम्, किन्तु त्वत्प्रार्थनासिद्ध्यर्थं सरस्वतीविनोदं करिष्यामि।

अथासौ राजा तां ब्राह्मणस्यासंभाव्यां प्रतिज्ञां श्रुत्वा ससचिवः प्रहृष्टो विस्मयान्वितस्तस्मै सादरं तान् कुमारान् समर्प्य परां निर्वृतिमाजगाम। विष्णुशर्मणापि तानादाय तदर्थं मित्रभेद-मित्रप्राप्ति-काकोलूकीय-लब्धप्रणाशापरीक्षितकारकाणीति पञ्च तन्त्राणि रचयित्वा पाठितास्ते राजपुत्राः; तेऽपि तान्यधीत्य मासषट्केन यथोक्ताः संवृत्ताः। ततः प्रभृत्येतत् "पञ्चतन्त्रम्" नाम नीतिशास्त्रं बालावबोधनार्थं भूतले संप्रवृत्तम्।

---

## पिङ्गलक-सञ्जीवक-दमनक-कथा

कदाचित् पिङ्गलको नाम सिंहः सर्वशृगालपरिवृतः पिपासाकुल उदकपानार्थं यमुनातटमवतीर्णः सञ्जीवकस्य गम्भीरतररावं दूरादेवाशृणोत्। तच्छ्रुत्वातीव व्याकुलहृदयःससाध्वसमाकारं प्रच्छाद्य वटतलेऽवस्थितः।

ततस्तन्मन्त्रिपुत्रं दमनकं नाम शृगालं सोऽब्रवीत्—भद्र, अहमस्माद्वनाद्गन्तुमिच्छामि। दमनक आह—कस्मात्? पिङ्गलक आह—यतोऽद्यास्मद्वने किमप्यपूर्वं सत्त्वं प्रविष्टं यस्यायं महाशब्दः श्रूयते, तस्य च शब्दानुरूपेण पराक्रमेण भाव्यमिति।

दमनक आह—यच्छब्दमात्राद्भयमुपगतः स्वामी तदयुक्तम्, न च युक्तं स्वामिनः पूर्वोपार्जितं वनं त्यक्तुम्। उक्तञ्च—

"पूर्वमेव मया ज्ञातं पूर्णमेतद्धि मेदसा।
अनुप्रविश्य विज्ञातं यावच्चर्म च दारु च॥"

पिङ्गलक आह—कथमेतत्? सोऽब्रवीत्—

'कश्चिद्गोमायुर्नाम शृगालः क्षुत्क्षामकण्ठ इतस्ततः परिभ्रमन् वने सैन्यद्वयसंग्रामभूमिमपश्यत्। तस्यां च दुन्दुभेः पतितस्य वायुवशाद्वल्लीशाखाग्रैर्हन्यमानस्य शब्दमशृणोत्। अथ क्षुभितहृदयश्चिन्तयामास—अहो! विनष्टोऽस्मि। तद् यावन्नास्य प्रोच्चारितशब्दस्य दृष्टिगोचरे गच्छामि, तावदन्यतो व्रजामि। अथवा नैतद् युज्यते सहसैव पितृपैतामहं वनं त्यक्तुम्—

भये वा यदि वा हर्षे सम्प्राप्ते यो विमर्शयेत्।
कृत्यं न कुरुते वेगान्न स सन्तापमाप्नुयात्॥

तत्तावज्जानामि कस्यायं शब्दः।

धैर्यमालम्ब्य विमर्शयन् यावन्मन्दं मन्दं गच्छति तावद्दुन्दुभिमपश्यत्। स च तं परिज्ञाय समीपं गत्वा स्वयमेव कौतुकादताडयत्, भूयश्च हर्षादचिन्तयत्—अहो! चिरादेतदस्माकं महद्भोजनमापतितम्। तन्नूनं प्रभूतमांसमेदोऽसृग्भिः परिपूरितं भविष्यति।

ततः परुषचर्मावगुण्ठितं तत् कथमपि विदार्यैकदेशे छिद्रं कृत्वा संहृष्टमना मध्ये प्रविष्टः। परं चर्मविदारणतो दंष्ट्राभंगः समजनि। अथ निराशीभूतस्तद्दारुशेषमवलोक्य श्लोकमेनमपठत्—

पूर्वमेव मया ज्ञातं पूर्णमेतद्धि मेदसा।
अनुप्रविश्य विज्ञातं यावच्चर्म च दारु च॥

ततो न शब्दमात्राद् भेतव्यम्।'

पिङ्गलक आह—भोः, पश्यायं मम सर्वोऽपि परिग्रहो भयव्याकुलितमनाः पलायितुमिच्छति, तत् कथमहं धैर्यावष्टम्भं करोमि? सोऽब्रवीत्—स्वामिन्, नैषामेष दोषः, यतः स्वामिसदृशा एव भवन्ति भृत्याः। उक्तं च—

"अश्वः शस्त्रं शास्त्रं वीणा वाणी नरश्च नारी च।
पुरुषविशेषं प्राप्ता भवन्त्ययोग्याश्च योग्याश्च॥"

तत् पौरुषावष्टम्भं कृत्वा त्वं तावदत्रैव प्रतिपालय यावदहमेतच्छब्दस्वरूपं ज्ञात्वागच्छामि, ततः पश्चाद्यथोचितं कार्यमिति।

पिङ्गलक आह—किं तत्र भवान् गन्तुमुत्सहते? स आह—किं स्वाम्यादेशात् सुभृत्यस्य कृत्याकृत्यमस्ति? उक्तञ्च—

"स्वाम्यादेशात् सुभृत्यस्य न भीः सञ्जायते क्वचित्।
प्रविशेन्मुखमाहेयं दुस्तरं वा महार्णवम्॥"

पिङ्गलक आह—भद्र, यद्येवं तद्गच्छ, शिवास्ते पन्थानः सन्तु इति। दमनकोऽपि तं प्रणम्य सञ्जीवकशब्दानुसारी प्रतस्थे।

अथ दमनके गते भयव्याकुलमनाः पिङ्गलकश्चिन्तयामास—अहो! न शोभनं कृतं मया, यत्तस्य विश्वासं गत्वात्माभिप्रायो निवेदितः। कदाचिद् दमनकोऽयसुभयवेतनो भूत्वा ममोपरि दुष्टबुद्धिः स्यात् भ्रष्टाधिकारत्वात्। तत्तावदस्य चिकीर्षितं वेत्तुमन्यत् स्थानान्तरं गत्वा प्रतिपालयामि, कदाचिद्दमनकस्तमादाय मां व्यापादयितुमिच्छति। उक्तञ्च—

"बृहस्पतेरपि प्राज्ञो न विश्वासे व्रजेन्नरः।
य इच्छेदात्मनो वृद्धिमायुष्यं च सुखानि च॥"

एवं संप्रधार्य स्थानान्तरं गत्वा दमनकमार्गमवलोकयन्नेकाकी तस्थौ। दमनकोऽपि सञ्जीवकसकाशं गत्वा वृषभोऽयमिति परिज्ञाय हृष्टमना व्यचिन्तयत्—अहो! शोभनमापतितम्! अनेनैतस्य सन्धिविग्रहद्वारेण मम पिङ्गलको वश्यो भविष्यतीति। उक्तञ्च—

"न कौलीन्यान्न सौहार्दान्नृपो वाक्ये प्रवर्तते।
मन्त्रिणां यावदभ्येति व्यसनं शोकमेव च॥"

एवं विचिन्तयन् पिङ्गलकाभिमुखः प्रतस्थे। पिङ्गलकोऽपि तमायान्तं प्रेक्ष्य स्वाकारं रक्षन् यथापूर्वमवस्थितः। दमनकोऽपि पिङ्गलकसकाशं गत्वा प्रणम्योपविष्टः।

पिङ्गलक आह—किं दृष्टं भवता तत् सत्त्वम् ? दमनक आह—दृष्टं स्वामिप्रसादात्। पिङ्गलक आह—अपि सत्यम् ? दमनक आह—किं स्वामिपादानामग्रेऽसत्यं विज्ञाप्यते ? उक्तञ्च—

"सर्वदेवमयो राजा मनुना संप्रकीर्तितः।
तस्मात्तं देववत् पश्येन्न व्यलीकेन कर्हिचित्॥"

पिङ्गलक आह—सत्यं दृष्टं भविष्यति भवता, न दीनोपरि महान्तः कुप्यन्तीति न त्वं तेन निपातितः। यतः—

तृणानि नोन्मूलयति प्रभञ्जनो मृदूनि नीचैःप्रणतानि सर्वतः।
स्वभाव एवोन्नतचेतसामयं महान् महत्स्वेव करोति विक्रमम्॥

दमनक आह—अस्त्वेवम्, स महात्मा, वयं कृपणाः ; तथापि स्वामी यदि कथयति ततो भृत्यत्वे नियोजयामि। पिङ्गलक आह सोच्छ्वासम्—किं भवाञ् शक्नोत्येवं कर्त्तुम् ? दमनक आह—किमसाध्यं बुद्धेरस्ति ? उक्तं च—

"न तच्छस्त्रैर्न नागेन्द्रैर्न हयैर्न पदातिभिः।
कार्यं संसिद्धिमभ्येति यथा बुद्ध्या प्रसाधितम्॥"

पिङ्गलक आह—यद्येवं तदमात्यपदेऽध्यारोपितस्त्वम्। अद्य प्रभृति प्रसादनिग्रहादिकं त्वयैव कार्यमिति निश्चयः। अथ दमनकः सत्वरं गत्वा साक्षेपं तमिदमाह—एह्येहीतो दुष्टवृषभ ! स्वामी पिङ्गलकस्त्वामाकारयति। किं निःशंको भूत्वा मुहुर्मुहुर्नदसि वृथा इति।

तच्छ्रुत्वा सञ्जीवकोऽब्रवीत्—भद्र, कोऽयं पिङ्गलकः ? दमनक आह—किं स्वामिनं पिङ्गलकमपि न जानासि ? तत् क्षणं प्रतिपालय, फलेनैव ज्ञास्यसि। नन्वयं सर्वमृगपरिवृतो वटतले स्वामी पिङ्गलकनामा सिंहस्तिष्ठति। तच्छ्रुत्वा गतायुषमिवात्मानं मन्यमानः सञ्जीवकः परं विषादमगमत्, आह च—भद्र, भवान् साधुसमाचारो वचनपटुश्च दृश्यते। तद्यदि मामवश्यं तत्र नयसि तदभयप्रदानेन स्वामिनः सकाशात् प्रसादः कारयितव्यः। दमनक आह—भोः, सत्यमभिहितं भवता। तत्त्वमत्रैव तिष्ठ, यावदहं तं समये दृष्ट्वा ततः पश्चात् त्वामानयामि इति।

तथानुष्ठिते दमनकः पिङ्गलकसकाशं गत्वेदमाह—स्वामिन्, न तत् प्राकृतं सत्त्वम्, स हि भगवतो महेश्वरस्य वाहनभूतो वृषभ इति। मया पृष्ट इदमूचे—

महेश्वरेण परितुष्टेन कालिन्दीपरिसरे शष्पाग्राणि भक्षयितुं समादिष्टः। किं बहुना? मम प्रदत्तं भगवता क्रीड़ार्थं वनमिदम्। पिङ्गलक आह सभयम्—सत्यं ज्ञातं मयाधुना। न देवताप्रसादं विना शष्पभोजिनो व्यालाकीर्णे एवंविधे वने निःशंका नदन्तो भ्रमन्ति। ततस्त्वया किमभिहितम्?

दमनक आह—स्वामिन्, एतदभिहितं मया यदेतद्वनं चण्डिकावाहनभूतस्य मत्स्वामिनः पिङ्गलकनाम्नः सिंहस्य विषयीभूतम्। तद्भवानभ्यागतः प्रियोऽतिथिः। तत् तस्य सकाशं गत्वा भ्रातृस्नेहेनैकत्र भक्षणपानविहरणक्रियाभिरेकस्थानाश्रयेण कालो नेय इति। ततस्तेनापि सर्वमेतत् प्रतिपन्नम्, उक्तं च सहर्षम्—स्वामिनः सकाशादभयदक्षिणा दापयितव्या इति। तदत्र स्वामी प्रमाणम्।

तच्छ्रुत्वा पिङ्गलक आह—साधु सुमते साधु! मन्त्रिश्रोत्रिय, साधु! मम हृदयेन सह संमन्त्र्य भवतेदमभिहितम्। तद्दत्ता मया तस्याभयदक्षिणा, परं सोऽपि मदर्थेऽभयदक्षिणां याचयित्वा द्रुततरमानीयतामिति।

दमनकोऽपि तं प्रणम्य सञ्जीवकसकाशं प्रस्थितः सहर्षमचिन्तयत्—अहो, प्रसादसम्मुखो नः स्वामी वचनवशगश्च संवृत्तः। तन्नास्ति धन्यतरो मम। उक्तं च—

"अमृतं शिशिरे वह्निरमृतं प्रियदर्शनम्।
अमृतं राजसम्मानममृतं क्षीरभोजनम्॥"

अथ सञ्जीवकसकाशमासाद्य सप्रश्रयमुवाच—भो मित्र, प्रार्थितोऽसौ मया भवदर्थं स्वाम्यभयप्रदानम्, तद्विश्रब्धं गम्यतामिति। परं त्वया राजप्रसादमासाद्य मया सह समयधर्मेण वर्तितव्यम्। न गर्वमासाद्य स्वप्रभुतया विचरणीयम्। अहमपि तव संकेतेन सर्वां राज्यधुरममात्यपदवीमाश्रित्योद्धरिष्यामि। एवं कृते द्वयोरप्यावयो राज्यलक्ष्मीर्भोग्या भविष्यति।

---

## चतुर्णां ब्राह्मणपुत्राणां कथा

कस्मिंश्चिदधिष्ठाने चत्वारो ब्राह्मणपुत्रा निवसन्ति स्म। तेषां त्रयः सर्वशास्त्रपारगाः परं बुद्धिरहिताः। एकस्तु शास्त्रपराङ्मुखः केवलं बुद्धिमान्। अथ कदाचित् तैर्मिलित्वा मन्त्रितम्—को गुणो विद्यया यदि देशान्तरं गत्वा प्रभूतार्थोपार्जनं न क्रियते? तत् सर्वे वयं देशान्तरं गच्छामः। एवं संमन्त्र्य ते गृहान्निर्जग्मुः।

अथ कञ्चित् पन्थानं गत्वा तेषु ज्येष्ठः प्राह—हंहो! अस्माकम् एकश्चतुर्थो मूर्खः केवलं बुद्धिमान्। न च विद्यां विना केवलबुद्ध्या धनं कदापि लभ्यते। सर्वथा वयमस्मै स्वोपार्जनविभागं न दास्यामः। तदेष निवृत्य स्वगृहं गच्छतु। ततो द्वितीयेनाभिहितम्—हंहो सुबुद्धे! विद्याहीनस्त्वम्, तद् गच्छ गृहम्।

अथ तृतीयेनाभिहितम्—अहो, न युज्यते कर्तुमेवम्। यतो वयं बाल्यात् प्रभृति क्रीडिता एकत्र। तदागच्छत्वेष त्रिभिरुपार्जितस्य वित्तस्य संविभागी च भवतु।

ततस्तैर्गच्छद्भिरटव्यां मृतसिंहास्थीनि दृष्टानि। दृष्ट्वैव युगपत् तेषां त्रय ऊचुः—हंहो, पूर्वाधीतविद्यायाः प्रत्यय इदानीमेव क्रियताम्; किञ्चिदेतन्मृत-सत्त्वं तिष्ठति, अभ्यस्तविद्याप्रभावेणैतत् प्रत्युज्जीवयामः। तत एकेनाभिहितम्—अहम् अस्थिसञ्चयं तावत् कर्तुं जानामि। द्वितीयेनाभिहितम्—अहं चर्म-मांसरुधिरं प्रयच्छामि। तृतीयेनाभिहितम्—अहमेनं सजीवनं करोमि।

तत एकेनास्थिसञ्चयः कृतः। द्वितीयेन चर्म-मांस-रुधिरेण संयोजितः। तृतीयो यावद् जीवितं योजयितुं लग्नस्तावत् स बुद्धिमता निषिद्ध उक्तश्च—पश्य कश्चित् सिंह एषः। तद् यद्येनं सजीवं करिष्यसि तदा सर्वानेव नो व्यापादयिष्यति स सिंहः। ततस्तेनाभिहितम्—धिङ् मूर्ख! नाहं विद्यां विफलतां नेष्यामि।

अथ बुद्धिमताभिहितम्—तर्हि प्रतीक्षस्व यावदहमेतं समीपवर्तिनं विटपिन-मारोहामि। ततस्तेन तथानुष्ठिते यावत् सिंहः सजीवः कृतस्तावत् त्रयोऽपि तेनोत्थाय व्यापादिताः। स च बुद्धिमान् सिंहे स्थानान्तरं गते वृक्षादवतीर्य गृहे प्रत्यावृत्तः।

---

## धर्मबुद्धि-पापबुद्धिकथा

कस्मिंश्चिद्देशे धर्मबुद्धिः पापबुद्धिश्च द्वे मित्रे प्रतिवसतः स्म। अथ कदाचित् पापबुद्धिना चिन्तितम्—यदहं तावन्मूर्खो दारिद्र्योपेतश्च, तदेनं धर्मबुद्धिमादाय देशान्तरं गत्वा, अस्याश्रयेणार्थोपार्जनं कृत्वा, एनमपि वञ्चयित्वा सुखी भवामि। अथान्यस्मिन्नहनि पापबुद्धिर्धर्मबुद्धिं प्राह—भो मित्र! वार्द्धकभावे किमात्मचेष्टितं स्मरिष्यसि? देशान्तरमदृष्ट्वा कां शिष्टजनवार्तां कथयिष्यसि? उक्तं च—

"विद्यां, वित्तं, शिल्पं तावन्नाप्नोति मानवः सम्यक्।
यावद्व्रजति न भूमौ देशाद्देशान्तरं हृष्टः॥"

अथ तद्वचनमाकर्ण्य प्रहृष्टमनास्तेनैव सह गुरुजनानुज्ञातः शुभेऽहनि देशान्तरं प्रस्थितः। तत्र च धर्मबुद्धिप्रभावेण भ्रमता पापबुद्धिनापि प्रभूततरं वित्तमासादितम्। ततश्च तौ द्वावपि प्रभूतोपार्जितवित्तौ प्रहृष्टौ स्वगृहं प्रत्यौत्सुक्येन प्रस्थितौ।

अथ स्वस्थानसमीपवर्त्तिना पापबुद्धिना धर्मबुद्धिरभिहितः—भद्र! न सर्वमेतद्धनं गृहं नेतुं युज्यते, यतः कुटुम्बिनो बान्धवाश्च प्रार्थयिष्यन्ति; तदत्रैव वनगहने क्वापि भूमौ निक्षिप्य किञ्चिन्मात्रमादाय गृहं प्रविशावः, भूयोऽपि प्रयोजने सञ्जाते, तन्मात्रं समेत्यास्मात् स्थानात् नेष्यावः। तदाकर्ण्य धर्मबुद्धिराह—भद्र! एवं क्रियताम्। तथानुष्ठिते द्वावपि तौ स्वगृहं गत्वा सुखेन स्थितवन्तौ।

अथान्यदा पापबुद्धिर्निशीथे तत्रागत्य सर्वं वित्तमादाय गर्तं पूरयित्वा स्वभवनं जगाम। अथान्येद्युर्धर्मबुद्धिं समेत्य प्रोवाच—सखे! बहुकुटुम्बावावां वित्ताभावात् सीदावः, तद्गत्वा ततः स्थानात् किञ्चिद्वित्तमानयावः। सोऽब्रवीत्—भद्र! एवं क्रियतामिति।

अथ तौ द्वावपि गत्वा यावत् तत् स्थानं खनतः, तावत् रिक्तं भाण्डं दृष्टवन्तौ। अत्रान्तरे पापबुद्धिः स्वशिरस्ताडयन् प्रोवाच—भो धर्मबुद्धे! त्वया हृतमेतद्धनम्, नान्येन, यतो भूयोऽपि गर्तापूरणं कृतम्; तत् प्रयच्छ मे तस्यार्द्धम्, नो चेद् राजकुले निवेदयिष्यामि। स आह—भो दुरात्मन्! मैवं वद; धर्मबुद्धिः खल्वहम्, नैतच्चोरकर्म करोमि।

एवं द्वावपि तौ विवदमानौ धर्माधिकरणं गतवन्तौ प्रोचतुः परस्परं दूषयन्तौ। अथ तौ धर्माधिकरणाधिष्ठितपुरुषैर्दिव्यार्थं यावन्नियोजितौ, तावत् पापबुद्धिराह—अहो! न सम्यग्दृष्टो न्यायः; उक्तं च—

"विवादेऽन्विष्यते पत्रं, पत्राभावे तु साक्षिणः।
साक्ष्यभावात् ततो दिव्यं प्रवदन्ति मनीषिणः॥"

तदत्र विषये वृक्षदेवता मम साक्षिभूता तिष्ठति, साप्यावयोरेकतरं चोरं वा साधुं वा करिष्यति। अथ तैः सर्वैरभिहितम्—भोः! युक्तमुक्तं भवता; तदस्माकमप्यत्र विषये महत् कौतूहलं वर्तते, तत्प्रत्यूषसमये युवाभ्यामस्माभिः सह तत्र वनोद्देशे गन्तव्यमिति।

एतस्मिन्नन्तरे पापबुद्धिर्गृहं गत्वा स्वं जनकमुवाच—तात! प्रभूतोऽयं मयार्थो धर्मबुद्धेश्चोरितः, स च तव वचनेन परिणतिं यास्यति; अन्यथास्माकं प्राणैः सह यास्यति। स आह—वत्स! तद् वद द्रुतम्, येन तद् द्रव्यं स्थिरतां नयामि। पापबुद्धिराह—तात! अस्ति तत्र प्रदेशे महाशमी, तस्यां महत्कोटरमस्ति, तत्र त्वं साम्प्रतमेव प्रविश; ततः प्रभातेऽहं यदा सत्यश्रावणं करोमि, तदा त्वया वाच्यम्—धर्मबुद्धिश्चोर इति।

तथानुष्ठिते प्रत्यूषे पापबुद्धिः स्नात्वा धौतप्रावरणो धर्मबुद्धि-पुरःसरो धर्माधिकरणिकैः सह तां शमीमभ्येत्य तारस्वरेण प्रोवाच—भगवति वनदेवते! आवयोर्मध्ये यश्चोरस्तं कथय। अथ पापबुद्धि-पिता शमीकोटरस्थः प्रोवाच—भोः! शृणुत, शृणुत; धर्मबुद्धिनापहृतमेतद्धनम्। तदाकर्ण्य सर्वे ते राजपुरुषा विस्मयोत्फुल्ललोचना यावद्धर्मबुद्धेर्वित्तहरणोचितं निग्रहं शास्त्रदृष्ट्यावलोकयन्ति, तावद्धर्मबुद्धिना तच्छमीकोटरं वह्निभोज्यद्रव्यैः परिवार्य वह्निना सन्दीपितम्।

अथ ज्वलति तस्मिन् शमीकोटरेऽर्द्धदग्धशरीरः स्फुटितेक्षणः करुणं परिदेवयन् पापबुद्धि-पिता निश्चक्राम, ततस्तैः सर्वैः पृष्टः सर्वं पापबुद्धिचेष्टितं निवेदयामास। अथ ते राजपुरुषाः पापबुद्धिं शमीशाखायां प्रतिलम्ब्य धर्मबुद्धिं प्रशस्येदमूचुः—अहो! साध्विदमुच्यते—

'उपायं चिन्तयेत् प्राज्ञस्तथापायं च चिन्तयेत्।'

तदेतेन पापबुद्धिनोपायश्चिन्तितो नापायः, ततस्तत्फलं प्राप्तम्।

---

## महाचतुरक-शृगालकथा

अस्ति कस्मिंश्चिद् वनोद्देशे महाचतुरको नाम शृगालः। तेन कदाचिदरण्ये स्वयंमृतो गजः समासादितः। परं तस्य समन्तात् परिभ्रमति, कठिनां त्वचं भेत्तुं न शक्नोति। अथात्रावसर इतश्चेतश्च परिभ्रमन् कश्चित् सिंहस्तत्रैव प्रदेशे समाययौ।

अथ तमागतं दृष्ट्वा स क्षितितलविन्यस्तमौलिमण्डलः संयोजितकरकमलः सविनयमुवाच—स्वामिन्, त्वदीयोऽहं लागुड़िकः, त्वदर्थे गजमिमं रक्षामि। तदेनं भक्षयतु स्वामी। अथ सिंहः प्राह—भोः, नाहमन्यहतं सत्त्वं कदाचिदपि भक्षयामि, तत् तवैव गजोऽयं मया प्रसादीकृतः। तच्छ्रुत्वा शृगालः सानन्दमाह—युक्तमिदं स्वामिनो निजभृत्येषु।

अथ सिंहे गते कश्चिद् व्याघ्रः समाययौ। तमपि दृष्ट्वा सोऽचिन्तयत्—एकस्तावद्दुरात्मा प्रणिपातेनापवाहितः, तत् कथमिदानीमेनमपवाहयिष्यामि? नूनं शूरोऽयं न खलु भेदं विना साध्यो भवति। उक्तं च—

"न यत्र शक्यते कर्तुं सामदानमथापि वा।
भेदस्तत्र प्रकर्तव्यो यतोऽसौ वशकारकः॥"

एवं सम्प्रधार्य तदभिमुखो गत्वेषदुन्नतकन्धरः ससंभ्रममुवाच—माम, कथमत्रभवान् मृत्युमुखे पतितः? येनैष सिंहेन गजो व्यापादितः, स च मामेतद्रक्षणे नियुज्य स्वयं स्नानार्थं गतः। तेन गच्छता समादिष्टम्—यदि कश्चिदिह व्याघ्रः समेति तत्त्वया सुगुप्तं ममावेदनीयम्, येन वनमिदं मया निर्व्याघ्रं कर्तव्यम्। यतः पूर्वं व्याघ्रेणैकेन मद्व्यापादितो गजः शून्य उच्छिष्टतां नीतः। तद्दिनादारभ्य व्याघ्रान् प्रति प्रकुपितोऽस्मि।

अथ तच्छ्रुत्वा व्याघ्रः संत्रस्तस्तमाह—भो भागिनेय, देहि मे प्राणदक्षिणाम्, यतस्त्वया तस्यात्र चिरायातस्यापि मदीया कापि वार्ता नाख्येया। एवमभिधाय सत्वरं पलायाञ्चक्रे।

अथ गते व्याघ्रे तत्र कश्चिद्द्वीपी प्राप। तमपि दृष्ट्वासौ व्यचिन्तयत्—दृढदंष्ट्रोऽयं चित्रकः, तदस्मादेवास्य गजचर्मभेदं कारयामि। इति निश्चित्य

तमुवाच—भो भगिनीसुत, किमिति चिराद्दृष्टोऽसि ? कथं च बुभुक्षित इव लक्ष्यसे ? तदतिथिरसि मे। उक्तं च—

"समयाभ्यागतोऽतिथिः।"

तदेष गजः सिंहेन हतस्तिष्ठति। अहं चास्य तदादिष्टो रक्षपालः। परं तथापि यावदसौ न समायाति तावदस्य गजस्य मांसं भक्षयित्वा तृप्तिं कृत्वा द्रुतं व्रज।

स आह—माम, यद्येवं तन्न कार्यं मेऽस्य मांसेन। यतः—

"जीवन् नरो भद्रशतानि पश्यति।"

तत् सर्वथा तदेव भुज्यते, यदेव परिणमति ; तदहमितोऽपयास्यामि। शृगाल आह—भो अधीर, विश्रब्धो भूत्वा भक्षय, तस्यागमनं दूरतोऽपि तवाहमावेदयिष्यामि। अथ द्वीपिना तथानुष्ठिते भिन्नां त्वचं विज्ञायाभिहितं जम्बुकेन—भो भगिनीसुत, गम्यतां गम्यताम्। एष सिंहः समायाति। तच्छ्रुत्वा चित्रकोऽपि दूरं प्रनष्टः।

अथ यावदसौ तद्भेदकृतद्वारेण मांसं भक्षयति, तावदतिसंक्रुद्धोऽपरः शृगालः समाययौ। अथ तमात्मतुल्यं ज्ञातपराक्रमं दृष्ट्वा—

"उत्तमं प्रणिपातेन शूरं भेदेन योजयत्।
नीचमल्पप्रदानेन समशक्तिं पराक्रमैः॥"

इति पठन् तदभिमुखकृतप्रयाणः स्वदंष्ट्राभिस्तं विदार्य दिगन्तभाजं कृत्वा स्वयं सुखेन चिरकालं हस्तिमांसं बुभुजे।

---

## चित्रांग-सारमेयस्य कथा

अस्ति कस्मिश्चिदधिष्ठाने चित्रांगो नाम सारमेयः। तत्र च चिरकालदुर्भिक्षं पतितम्, अन्नाभावाच्च सारमेयादयो निष्कुलतां गन्तुमारब्धाः। अथ चित्रांगः क्षुत्क्षामकण्ठस्तद्भयाद् देशान्तरं गतः।

तत्र च कस्मिंश्चित् पुरे कस्य च गृहमेधिनो गृहिण्याः प्रमादेन प्रतिदिनं गृहे प्रविश्य विविधान्नादि भक्षयन् परां तृप्तिं गच्छति, परं तद्‌गृहाद्‌बहिर्निष्क्रामन् अन्यैर्मदोद्धतसारमेयैः सर्वदिक्षु परिवृत्य सर्वांगं दंष्ट्राभिर्विदार्यते।

ततस्तेन विचिन्तितम्—वरं स्वदेशः, यत्र दुर्भिक्षेणापि सुखेन स्थीयते। न च कोऽपि युद्धं करोति। तद्वरं तदेव स्वनगरं व्रजामि। इत्यवधार्य स्वस्थानं प्रति जगाम।

अथासौ देशान्तरायातः स्वजनैः पृष्टः—भोः, कथय कीदृग् देशः, किंचेष्टो लोकः, क आहारः, कश्च व्यवहारस्तत्र इति। स आह—किं कथ्यते! देशस्य तु,

सुभिक्षाणि विचित्राणि शिथिलाः पौरयोषितः।
एको दोषो विदेशस्य स्वजातिर्यद् विरुध्यति॥

---

## हरिदत्त-क्षेत्रपालसर्पकथा

अस्ति कस्मिंश्चिदधिष्ठाने हरिदत्तो नाम ब्राह्मणः, तस्य च कृषिं कुर्व्वतः सदैव निष्फलः कालोऽतिवर्त्तते। अथैकस्मिन् दिवसे स ब्राह्मण उष्णकालावसाने घर्म्मार्त्तः स्वक्षेत्रमध्ये वृक्षच्छायायां प्रसुप्तोऽनतिदूरे वल्मीकोपरि प्रसारितं बृहत्-फटायुक्तं भीषणं भुजंगमं दृष्ट्वा चिन्तयामास—नूनमेषा क्षेत्रदेवता मया कदा-चिदपि न पूजिता, तेनेदं मे कृषिकर्म्म विफलीभवति; तदस्या अहं पूजामद्य करिष्यामि। इत्यवधार्य कुतोऽपि क्षीरं याचित्वा शरावे निक्षिप्य वल्मीकान्तिक-मुपागम्योवाच—भोः क्षेत्रपाल, मयैतावन्तं कालं न ज्ञातं यत्त्वमत्र वससि, तेन पूजा न कृता, तत् साम्प्रतं क्षमस्व इति। एवमुक्त्वा दुग्धं च निवेद्य गृहाभिमुखं प्रायात्।

अथ प्रातर्यावदागत्य पश्यति तावद्दीनारमेकं शरावे दृष्टवान्। एवं च प्रतिदिनमेकाकी समागत्य तस्मै क्षीरं ददाति, एकैकं च दीनारं गृह्णाति।

अथैकस्मिन् दिवसे वल्मीके क्षीरनयनाय पुत्रं निरूप्य ब्राह्मणो ग्रामान्तरं जगाम। पुत्रोऽपि क्षीरं तत्र नीत्वा संस्थाप्य च पुनर्गृहं समायातः। दिनान्तरे तत्र गत्वा दीनारमेकं च दृष्ट्वा गृहीत्वा च चिन्तितवान्—नूनं सुवर्णदीनारपूर्णोऽयं वल्मीकः। तदेनं हत्वा सर्वमेकवारं ग्रहीष्यामि। इत्येवं सम्प्रधार्य्यान्येद्युः क्षीरं ददता ब्राह्मणपुत्रेण सर्पो लगुडेन शिरसि ताडितः।

ततः कथमपि दैववशादमुक्तजीवित एव रोषात्तमेव तीव्रविषदशनैस्तथादशत् यथा सद्यः पञ्चत्वमुपागतः, स्वजनैश्च नातिदूरे क्षेत्रस्य काष्ठसञ्चयैः संस्कृतः।

अथ द्वितीयदिने तस्य पिता समायातः, स्वजनेभ्यः सुतविनाशकारणं श्रुत्वा तथैव समर्थितवान्। अब्रवीच्च—

भूतान् यो नानुगृह्णाति ह्यात्मनः शरणागतान्।
भूतार्थास्तस्य नश्यन्ति हंसाः पद्मवने यथा॥

पुरुषैरुक्तम्—कथमेतत्? ब्राह्मणः कथयति—

'अस्ति कस्मिश्चिदधिष्ठाने चित्ररथो नाम राजा। तस्य योधैः सुरक्ष्यमाणं पद्मसरो नाम सरस्तिष्ठति, तत्र च प्रभूता जाम्बूनदमया हंसास्तिष्ठन्ति षण्मासे षण्मासे पिच्छमेकैकं परित्यजन्ति।

अथ तत्र सरसि सौवर्णो बृहत्पक्षी समायातः। तैश्चोक्तः—अस्माकं मध्ये त्वया न वस्तव्यम्, येन कारणेनास्माभिः षण्मासान्ते पिच्छैकैकदानं कृत्वा गृहीतमेतत् सरः। एवं च किं बहुना परस्परं द्वैधमुत्पन्नम्। स च राज्ञः शरणं गतोऽब्रवीत्—देव, एते पक्षिण एवं वदन्ति यदस्माकं राजा किं करिष्यति? न कस्याप्यावासं दद्मः; मया चोक्तम्—न शोभनं युष्माभिरभिहितम्, अहं गत्वा राज्ञे निवेदयिष्यामि। एवं स्थिते देवः प्रमाणम्।

ततो राजा भृत्यानब्रवीत्—भो भोः गच्छत, सर्व्वान् पक्षिणो गतासून् कृत्वा शीघ्रमानयत। राजादेशानन्तरमेव प्रचेलुस्ते। अथ लगुडहस्तान् राजपुरुषान् दृष्ट्वा तत्रैकेन पक्षिणा वृद्धेनोक्तम्—भोः स्वजनाः, न शोभनमापतितम्। ततः सर्व्वैरेकमतीभूय शीघ्रमुत्पतितव्यम्। तैश्च तथानुष्ठितम्। अतोऽहं ब्रवीमि —भूतान् यो नानुगृह्णाति इति।'

इत्युक्त्वा पुनरपि ब्राह्मणः प्रत्यूषे क्षीरं गृहीत्वा तत्र गत्वा तारस्वरेण सर्पमस्तौत्। तदा सर्पश्चिरं वल्मीकद्वारान्तर्लीन एव ब्राह्मणं प्रत्युवाच—त्वं

लोभादत्रागतः पुत्रशोकमपि विहाय। अतः परं तव मम च प्रीतिर्नोचिता। तव पुत्रेण यौवनोन्मादेनाहं ताडितः, मया स दष्टः। कथं मया लगुडप्रहारो विस्मर्तव्यः, त्वया च पुत्रशोकदुःखं कथं विस्मर्तव्यम्? इत्युक्त्वा बहुमूल्यं हीरकमणिं तस्मै दत्त्वा—अतः परं पुनस्त्वया नागन्तव्यम् इति पुनरुक्त्वा विवरान्तर्गतः। ब्राह्मणश्च मणिं गृहीत्वा पुत्रबुद्धिं निन्दन् स्वगृहमागतः।

अत उच्यते—

'चितिकां दीपितां पश्य फटां भग्नां ममैव च।
भिन्नश्लिष्टा तु या प्रीतिर्न सा स्नेहेन वर्द्धते॥'

---

## सोमिलकाख्यानम्

सोमिलकनामानं कौलिकमाह पुरुषः—भोः, गच्छ भूयोऽपि वर्धमानपुरम्। तत्र द्वौ वणिक्पुत्रौ वसतः—एको गुप्तधनः द्वितीय उपभुक्तधनः। ततस्तयोः स्वरूपं बुद्ध्वैकस्य वरः प्रार्थनीयः। यदि ते धनेन प्रयोजनमभक्षितेन, ततस्त्वामपि गुप्तधनं करोमि; अथवा दत्तभोग्येन धनेन ते प्रयोजनम्, तदुपभुक्तधनं करोमीति। एवमुक्त्वाऽदर्शनं गतः। सोमिलकोऽपि विस्मितमना भूयोऽपि वर्धमानपुरं गतः।

अथ सन्ध्यासमये श्रान्तः कथमपि तत् पुरं प्राप्तो गुप्तधनगृहं पृच्छन् कृच्छ्राल्लब्ध्वास्तमिते सूर्ये प्रविष्टः। अथासौ भार्यापुत्रसमेतेन गुप्तधनेन निर्भर्त्स्यमानो हठाद् गृहं प्रविश्योपविष्टः। ततश्च भोजनवेलायां तस्यापि भक्तिवर्जितं किंचिदशनं दत्तम्। ततश्च भुक्त्वा तत्रैव यावत् सुप्तो निशीथे पश्यति तावद् द्वौ पुरुषौ परस्परम् मन्त्रयतः।

तत्रैक आह—भोः कर्त्तः, किं त्वयास्य गुप्तधनस्यान्योऽधिको व्ययो निर्मितः, यत् सोमिलकस्यानेन भोजनं दत्तम्? तदयुक्तं त्वया कृतम्। स आह—भोः कर्मन्, न ममात्र दोषः। मया पुरुषस्य लाभप्राप्तिर्दातव्या, तत्परिणतिः पुनस्त्वदायत्ता इति।

नाहमग्रे यास्यामि। एवमभिधाय ताम्रं यथेच्छया गृहीत्वा प्रथमो निवृत्तः। ते त्रयोऽप्यग्रे प्रस्थिताः।

अथ किञ्चिन्मात्रं गतस्याग्रेसरस्य वर्त्तिर्निपपात। सोऽपि यावत् खनितुमारब्धस्तावद्रूप्यमयी क्षितिः। ततः प्रहर्षितः प्राह—भो भोः, गृह्यतां यथेच्छया रूप्यम्; नाग्रे गन्तव्यम्।

तावूचतुः—भोः, पृष्ठतस्ताम्रमयी भूमिः, अग्रतो रूप्यमयी। तन्नूनमग्रे सुवर्णमयी भविष्यति, तदनेन प्रभूतेनापि दारिद्रनाशो न भवति; तदावामग्रे यास्यावः। एवमुक्त्वा द्वावप्यग्रे प्रस्थितौ। सोऽपि स्वशक्त्या रूप्यमादाय निवृत्तः।

तयोरपि गच्छतोरेकस्याग्रे वर्त्तिः पपात। सोऽपि प्रहृष्टो यावत् खनति तावत् सुवर्णभूमिं दृष्ट्वा द्वितीयं प्राह—भोः, गृह्यतां स्वेच्छया सुवर्णम्, सुवर्णादन्यत्र किञ्चिदुत्तमं भविष्यति। स प्राह—मूढ, न किञ्चिद् वेत्सि; प्राक् ताम्रम्, ततो रूप्यम्, ततः सुवर्णम्, तन्नूनमतःपरं रत्नानि भविष्यन्ति, येषामेकतमेनापि दारिद्रनाशो भवति; तदुत्तिष्ठ, अग्रे गच्छावः; किमनेन भारभूतेनापि प्रभूतेन? स आह—गच्छतु भवान्, अहमत्र स्थितस्त्वां प्रतिपालयिष्यामि।

तथानुष्ठिते सोऽपि गच्छन्नेकाकी ग्रीष्मार्कप्रतापसन्तप्ततनुः पिपासाकुलितः सिद्धिमार्गच्युत इतश्चेतश्च बभ्राम। अथ भ्राम्यन् स्थलोपरि पुरुषमेकं रुधिरप्लावितगात्रं भ्रमच्चक्रमस्तकमपश्यत्। ततो द्रुततरं गत्वा तमवोचत्—भोः, को भवान्? किमेवं चक्रेण भ्रमता शिरसि तिष्ठसि? तत् कथय मे यदि कुत्रचिज्जलमस्ति।

एवं तस्य प्रवदतस्तच्चक्रं तत्क्षणात्तस्य शिरसो ब्राह्मणमस्तके चटितम्। स आह—भद्र, किमेतत्? स आह—ममाप्येवमेवैतच्छिरसि चटितम्। स आह—तत् कथय कदैतदुत्तरिष्यति, महती मे वेदना वर्त्तते। स आह—यदि त्वमिव कश्चिद्धृतसिद्धिवर्तिरेवमागत्य त्वामालापयिष्यति तदा तस्य मस्तके चटिष्यति।

स आह—कियान् कालस्तवैवं स्थितस्य? स आह—साम्प्रतं को राजा धरणीतले? स आह—वीणावत्सराजः। स आह—अहं तावत् कालसंख्यां

न जानामि। परं यदा रामो राजासीत्तदाहं दारिद्र्योपहतः सिद्धिवर्त्तिमादायानेन पथा समायातः। ततो मयान्यो नरो मस्तकधृतचक्रो दृष्टः, पृष्टश्च। ततश्चैतज्जातम्।

स आह--भद्र, कथं तवैवं स्थितस्य भोजनजलप्राप्तिरासीत्? स आह--भद्र, धनदेन निधानहरणभयात् सिद्धानामेतद्भयं दर्शितम्, तेन कश्चिदपि नागच्छति। यदि कश्चिदायाति स क्षुत्पिपासानिद्रारहितो जरामरणवर्जितः केवलमेवं वेदनामनुभवतीति। तदाज्ञापय मां स्वगृहाय। इत्युक्त्वा गतः।

अथ तस्मिश्चिरयति स सुवर्णसिद्धिस्तस्यान्वेषणपरस्तत्पदपङ्क्त्या यावत् किञ्चिद्वनान्तरमागच्छति तावद्रुधिरप्लावितशरीरस्तीक्ष्णचक्रेण मस्तके भ्रमता सवेदनः क्वणन्नुपविष्टस्तिष्ठति। तत्समीपवर्तिना भूत्वा सबाष्पं पृष्टः—भद्र, किमेतत्? स आह--विधिनियोगः। स आह—कथं तत्? कथय कारणमेतस्य।

सोऽपि तेन पृष्टः सर्वं चक्रवृत्तान्तमकथयत्। तत् श्रुत्वासौ तं विगर्हयन्निदमाह--भोः, निषिद्धस्त्वं मया नैकशो न शृणोषि मे वाक्यम्। तत् किं क्रियते, विद्यावानपि कुलीनोऽपि बुद्धिरहितः। अथवा साध्विदमुच्यते--

'अतिलोभो न कर्त्तव्यो लोभं नैव परित्यजेत्।
अतिलोभाभिभूतस्य चक्रं भ्रमति मस्तके॥'

---

## असम्भाव्यचिन्तापरिणामः

कस्मिंश्चिन्नगरे कश्चित् स्वभावकृपणो नाम ब्राह्मणः प्रतिवसति स्म। तेन भिक्षार्जितैः सक्तुभिर्भुक्तशेषैः कलशः सम्पूरितः। तं च घटं नागदन्तेऽवलम्ब्य तस्याधस्तात् खट्वां निधाय सततमेकदृष्ट्या तमवलोकयति।

अथ कदाचिद्रात्रौ सुप्तश्चिन्तयामास यत्—परिपूर्णोऽयं घटस्तावत् सक्तुभिर्वर्त्तते। तद् यदि दुर्भिक्षं भवति तदनेन रूपकाणां शतमुत्पद्यते; ततस्तेन

मयाजाद्वयं ग्रहीतव्यम्। ततः षाण्मासिकप्रसववशात्ताभ्यां यूथं भविष्यति। ततोऽजाभिः प्रभूता गा ग्रहीष्यामि, गोभिर्महिषीः, महिषीभिर्वडवाः। वडवा-प्रसवतः प्रभूता अश्वा भविष्यन्ति, तेषां विक्रयात् प्रभूतं सुवर्णं भविष्यति। सुवर्णेन चतुःशालं गृहं सम्पद्यते। ततः कश्चिद्ब्राह्मणो मम गृहमागत्य प्राप्तवयस्कां रूपाढ्यां कन्यां दास्यति, तत्सकाशात् पुत्रो मे भविष्यति। तस्याहं सोमशर्मेति नाम करिष्यामि। ततस्तस्मिन् जानुचलनयोग्ये सञ्जातेऽहं पुस्तकं गृहीत्वाश्व-शालायाः पृष्ठदेश उपविष्टस्तदवधारयिष्यामि। अत्रान्तरे सोमशर्म्मा मां दृष्ट्वा जनन्युत्सङ्गाज्जानुप्रचलनपरोऽश्वखुरासन्नवर्त्ती मत्समीपमागमिष्यति। ततोऽहं ब्राह्मणीं कोपाविष्टोऽभिधास्यामि—गृहाण तावद् बालकम्। सापि गृहकर्म्म-व्यग्रतयास्मद्वचनं न श्रोष्यति। ततोऽहं समुत्थाय तां पादप्रहारेण ताडयिष्यामि।

एवं तेन ध्यानस्थितेन तथैव पादप्रहारो दत्तो यथा स घटो भग्नः सक्तुभिः पाण्डुरतां गतः। अतः साधूच्यते—

'अनागतवतीं चिन्तामसंभाव्यां करोति यः।
स एव पाण्डुरः शेते सोमशर्म्मपिता यथा॥'

---

## चन्द्रभूपतिकथा

कस्मिंश्चिन्नगरे चन्द्रो नाम भूपतिः प्रतिवसति स्म। तस्य पुत्रा वानर-क्रीडारता वानरयूथं नित्यमेवानेकभोजनभक्ष्यादिभिः पुष्टिं नयन्ति स्म। अथ वानरयूथाधिपो यः स औशनस-बार्हस्पत्य-चाणक्यमतवित् तदनुष्ठाता च तान् सर्व्वानप्यध्यापयति स्म।

अथ तस्मिन् राजगृहे लघुकुमारवाहनयोग्यं मेषयूथमस्ति। तन्मध्यादेको जिह्वालौल्यादहर्निशं निःशङ्कं महानसे प्रविश्य यत् पश्यति तत् सर्व्वं भक्षयति। ते च सूपकारा यत् किञ्चित् काष्ठं मृन्मयं भाजनं कांस्यपात्रं ताम्रपात्रं वा पश्यन्ति तेनाशु ताडयन्ति।

सोऽपि वानरयूथपस्तद्दृष्ट्वा व्यचिन्तयत्—अहो, मेषसूपकारकलहोऽयं वानराणां क्षयाय भविष्यति, यतोऽन्नास्वादलम्पटोऽयं मेषो महाकोपाश्च सूपकारा यथासन्न-वस्तुना प्रहरन्ति, तद् यदि वस्तुनोऽभावात् कदाचिदुल्मुकेन ताडयिष्यन्ति तदोर्णा-प्रचुरोऽयं मेषः स्वल्पेनापि वह्निना प्रज्वलिष्यति। तद्दह्यमानः पुनरश्वकुट्यां समीपवर्त्तिन्यां प्रवेक्ष्यति, सापि तृणप्राचुर्य्याज्ज्वलिष्यति, ततोऽश्वा वह्निदाह-मवाप्स्यन्ति। शालिहोत्रेण पुनरेतदुक्तम् यद्वानरवसयाश्वानां वह्निदाहदोषः प्रशाम्यति। तन्नूनमेतेन भाव्यमत्र निश्चयः। एवं निश्चित्य सर्वान् वानरानाहूय रहसि प्रोवाच यत्—

मेषेण सूपकाराणां कलहो यत्र जायते।
स भविष्यत्यसन्दिग्धं वानराणां क्षयावहः॥
तस्मात् स्यात् कलहो यत्र गृहे नित्यमकारणः।
तद् गृहं जीवितं वाञ्छन् दूरतः परिवर्जयेत्॥

तथा च—

कलहान्तानि हर्म्याणि, कुवाक्यान्तं च सौहृदम्।
कुराजान्तानि राष्ट्राणि, कुकर्मान्तं यशो नृणाम्॥

तन्न यावत् सर्व्वेषां संक्षयो भवति तावदेतद्राजगृहं संत्यज्य वनं गच्छामः।

अथ तत्तस्य वचनमश्रद्धेयं श्रुत्वा मदोद्धता वानराः प्रहस्य प्रोचुः—भोः, भवतो वृद्धभावाद् बुद्धिवैकल्यं सञ्जातं येनैतद् ब्रवीषि। उक्तं च—

"वदनं दशनैर्हीनं, लाला स्रवति नित्यशः।
न मतिः स्फुरति क्वापि बाले वृद्धे विशेषतः॥"

न वयं स्वर्गसमानोपभोगात् नानाविधान् भक्ष्यविशेषान् राजपुत्रैः स्वहस्तदत्तान-मृतकल्पान् परित्यज्य तत्राटव्यां कषाय-कटु-तिक्त-क्षार-रूक्षफलानि भक्षयिष्यामः।

तत् श्रुत्वाश्रुकलुषां दृष्टिं कृत्वा स प्रोवाच—रे रे मूर्खाः, यूयमेतस्य सुखस्य परि-णामं न जानीथ। किं न पाकरसास्वादनप्रायमेतत् सुखं परिणामे विषवद् भविष्यति? तदहं कुलक्षयं स्वयं नावलोकयिष्यामि, साम्प्रतं वनं यास्यामि। उक्तं च—

"मित्रं व्यसनसम्प्राप्तं, स्वस्थानं परपीडितम्।
धन्यास्ते ये न पश्यन्ति देशभङ्गं कुलक्षयम्॥"

एवमभिधाय सर्वांस्तान् परित्यज्य स यूथाधिपोऽटव्यां गतः।

अथ तस्मिन् गतेऽन्यस्मिन्नहनि स मेषो महानसे प्रविष्टो यावत् सूपकारेण नान्यत् किञ्चित् समासादितम् तावदर्द्धज्वलितकाष्ठेन ताड्यमानो जाज्वल्यमान-शरीरः शब्दायमानोऽश्वकुट्यां प्रत्यासन्नवर्तिन्यां प्रविष्टः। तत्र तृणप्राचुर्य-युक्तायां क्षितौ तस्य प्रलुठतः सर्वत्रापि वह्निज्वालास्तथा समुत्थिता यथा केचिदश्वाः स्फुटितलोचनाः पञ्चत्वं गताः, केचिद्बन्धनानि त्रोटयित्वार्धदग्धशरीरा इतश्चेतश्च ह्लेषमाणा धावन्तः सर्वमपि जनसमूहमाकुलीचक्रुः।

अत्रान्तरे राजा सविषादः शालिहोत्रज्ञान् वैद्यानाहूय प्रोवाच—भोः, प्रोच्यता-मेषामश्वानां कश्चिद्दाहोपशमनोपायः। तेऽपि शास्त्राणि विलोक्य प्रोचुः—देव, प्रोक्तमत्र विषये भगवता शालिहोत्रेण यत्—

"कपीनां मेदसा दोषो वह्निदाहसमुद्भवः।
अश्वानां नाशमभ्येति तमः सूर्य्योदये यथा॥"

तत् क्रियतामेतच्चिकित्सितं द्राक् यावदेते न दाहदोषेण विनश्यन्ति।

सोऽपि तदाकर्ण्य समस्तवानरवधमादिष्टवान्। किं बहुना, सर्व्वेऽपि ते वानरा विविधायुध-लगुड-पाषाणादिभिर्व्यापादिता।

अथ सोऽपि वानरयूथपस्तं पुत्र-पौत्र-भ्रातृसुत-भागिनेयादिसंक्षयं ज्ञात्वा परं विषादमुपागतः। स त्यक्ताहारक्रियो वनाद्वनं पर्यटति, अचिन्तयच्च—कथमहं तस्य नृपापसदस्यानृणताकृत्येनापकृत्यं करिष्यामि?
उक्तं च—

"मर्षयेद्धर्षणां योऽत्र वंशजां परनिर्मिताम्।
भयाद्वा यदि वा कामात् स ज्ञेयः पुरुषाधमः॥"

अथ तेन वृद्धवानरेण कुत्रचित् पिपासाकुलेन भ्रमता पद्मिनीखण्डमण्डितं सरः समासादितम्। तद् यावत् सूक्ष्मेक्षिकयावलोकयति तावद्वनचरमनुष्याणां पद-पङ्क्तिप्रवेशोऽस्ति, न निष्क्रमणम्। ततश्चिन्तितम्—नूनमत्र जलान्ते दुष्ट-ग्राहेण भाव्यम्। तत् पद्मिनीनालमादाय दूरस्थोऽपि जलं पिबामि।

तथानुष्ठिते तन्मध्याद्राक्षसो निष्क्रम्य रत्नमालाविभूषितकण्ठस्तमुवाच—भोः, अत्र यः सलिले प्रवेशं करोति स मे भक्ष्य इति। तन्नास्ति धूर्त्ततरस्त्वत्-समोऽन्यो यत् पानीयमनेन विधिना पिबसि, ततस्तुष्टोऽहम्, प्रार्थयस्व हृदय-वाञ्छितम्।

कपिराह—भोः, कियती ते भक्षणशक्तिः? स आह—शत-सहस्रायुत-लक्षाण्यपि जलप्रविष्टानि भक्षयामि, बाह्यतः शृगालोऽपि मां दूषयति।

वानर आह—अस्ति मे केनचिद् भूपतिना सहात्यन्तं वैरम्, यद्येनां रत्नमालां मे प्रयच्छसि तत् सपरिवारमपि तं भूपतिं वाक्प्रपञ्चेन लोभयित्वात्र सरसि प्रवेशयामि। सोऽपि श्रद्धेयं वचस्तस्य श्रुत्वा रत्नमालां दत्त्वा प्राह—भो मित्र, यत् समुचितं भवति तत् कर्त्तव्यम् इति।

वानरोऽपि रत्नमालाविभूषितकण्ठो वृक्षप्रासादेषु परिभ्रमन् जनैर्दृष्टः, पृष्टश्च—भो यूथप, भवानियन्तं कालं कुत्र स्थितः? भवतेदृग्रत्नमाला कुत्र लब्धा, या दीप्त्या सूर्य्यमपि तिरस्करोति?

वानरः प्राह—अस्ति कुत्रचिदरण्ये गुप्ततरं महत् सरो धनदनिर्म्मितम्। तत्र सूर्य्येऽर्द्धोदिते रविवारे यः कश्चिन्निमज्जति स धनदप्रसादादीदृग्रत्नमालाविभूषित-कण्ठो निःसरति।

अथ भूभुजा तदाकर्ण्य स वानरः समाहूतः, पृष्टश्च—भो यूथाधिप, किं सत्यमेतत्? रत्नमालासनाथं सरोऽस्ति क्वापि? कपिराह—स्वामिन्, एष प्रत्यक्षतया मत्कण्ठस्थितया रत्नमालया प्रत्ययस्ते। तद् यदि रत्नमालया प्रयोजनं तन्मया सह कमपि प्रेषय येन दर्शयामि।

तत् श्रुत्वा नृपतिराह—यद्येवं तदहं सपरिजनः स्वयमेष्यामि येन प्रभूता रत्नमालाः सम्पद्यन्ते। वानर आह—एवं क्रियताम्।

तथानुष्ठिते भूपतिना सह रत्नमालालोभेन सर्वे कलत्रभृत्याः प्रस्थिताः। वानरोऽपि राज्ञा दोलाधिरूढेन स्वोत्सङ्गे आरोपितः सुखेन प्रीतिपूर्व्वमानीयते।

अथवा साध्विदमुच्यते—

> "तृष्णे देवि नमस्तुभ्यं यया वित्तान्विता अपि।
> अकृत्येषु नियोज्यन्ते भ्राम्यन्ते दुर्गमेष्वपि॥"

तथा च—

> "इच्छति शती सहस्रं, सहस्री लक्षमीहते।
> लक्षाधिपस्तथा राज्यं, राज्यस्थः स्वर्गमीहते॥
> जीर्यन्ते जीर्यतः केशा, दन्ता जीर्यन्ति जीर्यतः।
> जीर्यतश्चक्षुषी श्रोत्रे, तृष्णैका तरुणायते॥"

अथ तत् सरः समासाद्य वानरः प्रत्यूषसमये राजानमुवाच—देव, अत्रार्धोदिते सूर्य्येऽत्रप्रविष्टानां सिद्धिर्भवति। तत् सर्व्वोऽपि जन एकदैव प्रविशतु, त्वया पुनर्मया सह प्रवेष्टव्यं येन पूर्व्वदृष्टस्थानमासाद्य प्रभूतास्ते रत्नमाला दर्शयामि।

अथ प्रविष्टास्ते लोकाः सर्व्वे भक्षिता राक्षसेन। अथ तेषु चिरायमाणेषु राजा वानरमाह—भो यूथाधिप, किमिति चिरायते मे जनः?

तत् श्रुत्वा वानरः सत्वरं वृक्षमारुह्य राजानमुवाच—भो दुष्टनरपते, राक्षसेनान्तःसलिलस्थितेन भक्षितस्ते परिजनः; साधितं मया कुलक्षयजं वैरम्। तद् गम्यताम्; त्वं स्वामीति मत्वा नात्र प्रवेशितः। उक्तं च—

"कृते प्रतिकृतं कुर्य्याद्धिंसिते प्रतिहिंसितम्।
न तत्र दोषं पश्यामि दुष्टे दुष्टं समाचरेत्॥"

तत्त्वया मम कुलक्षयः कृतः, मया पुनस्तव इति।

अथैतदाकर्ण्य राजा कोपाविष्टः पदातिरेकाकी यथायातमार्गेण निष्क्रान्तः।

अथ तस्मिन् भूपतौ गते राक्षसस्तृप्तो जलान्निष्क्रम्य सानन्दमिदमाह—

हतः शत्रुः, कृतं मित्रं, रत्नमाला न हारिता।
नालेनापिबता तोयं भवता साधु वानर॥

अतः साध्विदमुच्यते—

'यो लौल्यात् कुरुते कर्म नैवोदर्कमवेक्षते।
विडम्बनामवाप्नोति स यथा चन्द्रभूपतिः॥'

———

## महात्मनः शिविकपाख्यानम्

अस्ति राजा शिविर्नाम सकलभूपालमौलिमालार्चितचरणः परमकारुणिकः सकलार्थिजनसंपादितमनोरथः। तस्यानन्यसदृश्या दानशीलतया यशस्त्रिदिवमारुरोह।

अथ कदाचिदाखण्डलश्चिन्तयामास—नास्ति दानशीलः शिविना तुल्यः। तत् कोऽस्याभिप्रायः, कियद्वा सत्त्वमस्य इति जिज्ञासार्थं धर्ममाहूय स्वयं कपोतोऽभवत्। धर्मश्च श्येनः कपोतस्य पृष्ठतस्त्वरितगतिरभिभवितुं प्रवृत्तः।

अथ तस्य राज्ञः सुखासनस्थस्य प्रभातसमय एवास्थानगतस्यासौ कपोतः कम्पमानो भय-तरल-नेत्रतारकः करुणरसितमाविष्कुर्वंश्चरणसमीपे सहसैव संनिपतितः, प्रोवाच भयगद्‌गदया गिरा—राजन्, शरणागतोऽस्मि ते, परित्रायस्व मां श्येनात्। अथ श्येनोऽपि राज्ञः पुरतः पपात। सोऽपि—राजन्, मुञ्च मुञ्च, क्षुधातुरस्य मे भक्ष्यं समर्पयस्वेति प्रोच्चैरुवाच।

कपोत आह—देव, शरणागतस्य मे परित्राणमर्हसि कर्त्तुम्। स्वशरीराण्यपि शरणागतार्थं त्यजन्ति साधवो नित्यम्, न शरणागतम्। श्येनोऽब्रवीत्—राजन्, सकलमनोरथदाता किल श्रूयसे, अतो मे भक्ष्यमेनं दातुमर्हसि ; प्राणसंशयमापन्नोऽस्मीति।

असावपि राजा जातकारुण्यः कथमेतदिति संभ्रान्तो दोलारूढ इव सान्त्वयन् श्येनमाह—नैष सतां पन्थाः शरणागतपरित्यागः, तदहं मांसमन्यदेव ते दापयामि यावत् तृप्तिमवाप्नोषीति। श्येन आह—न वयं पर-हत-पिशितभुजः, स्वयं जीवतो मांसान्युष्णरुधिरकललान्यास्वादयामहे ; किन्तु यावन्मात्रमिदं कपोतमांसं तुलितं भवति तावन्मे स्वमांसं प्रयच्छेति।

बाढम् दातास्मीति राज्ञि प्रतिपन्ने हाहाकारः समभूद् भूभुजाम्—देव, मा साहसं कार्षीः, एष श्येनरूपी राक्षसस्त्वद्‌विनाशहेतुरागत इति। एवमार्तनादे वर्तमाने तुलां कपोतः समारोपितः। कक्षां तत्समां कृत्वा स्वमांसमंगावयवादुत्कृत्यारोपितं न च कपोतसमं भवत्येव! अवशेषावयवविलुप्तपिशितः शिविर्यदा कपोतस्य न तुल्यतां सञ्जगाम तदा नमः सर्वविदे धर्मायेति कृत्वा स्वयमेव तुलामधिरूढः।

अथ दिवि देवदुन्दुभयः प्रणेदुः। अविरलकुसुमवृष्टिसारः समीरणः प्रववौ। साधु साध्विति दशस्वपि दिक्षु वाचो विचेरुः। अत्रान्तरे धर्म-पाकशासनौ प्रकटितरूपौ तं राजानमाहतुः—साधु महीनाथ, शोभनस्तेऽतिनिपुणः प्राणिधर्मो विज्ञातः, परमार्थतस्त्वमेव जिज्ञासितः। तदिदं शरीरं ते पुरातनमिवास्तु, कोशमक्षयम्, धर्मे च ते सदा मतिर्भूतभूतये भवतु इत्युक्त्वान्तर्धानमागतौ।

———

## चतुर्दन्तमहागज-कथा

कस्मिंश्चिद् वने चतुर्दन्तो नाम महागजो यूथाधिपः प्रतिवसति स्म। तत्र कदाचिन् महत्यनावृष्टिः सञ्जाता प्रभूतवर्षाणि यावत्। तया तडागह्लद-पल्वलसरांसि शोषमुपगतानि।

अथ तैः समस्तगजैः स गजराजः प्रोक्तः--देव! पिपासाकुला गजकलभा मृतप्राया अपरे मृताश्च, तदन्विष्यतां कश्चिज्जलाशयो यत्र जलपानेन स्वस्थतां व्रजन्ति। ततश्चिरं ध्यात्वा तेनाभिहितम्--अस्ति महान् ह्लदो विविक्ते प्रदेशे स्थलमध्यगतः पातालगंगाजलेन सदैव पूर्णः। तत्तत्र गम्यतामिति।

तथानुष्ठिते पञ्चरात्रमुपसर्पद्भिः समासादितस्तैः स ह्लदः। तत्र स्वेच्छया जलमवगाह्य अस्तगमनवेलायां निष्क्रान्ताः। तस्य च ह्लदस्य समन्ताच्छशकबिला असंख्याः सुकोमलभूमौ तिष्ठन्ति। तेऽपि समस्तैरपि तैर्गजैरितस्ततो भ्रमद्भिः परिभग्नाः। बहवः शशकाः भग्नपादशिरोग्रीवा विहिताः, केचिन्मृताः केचिज्जीवशेषा जाताः।

अथ गते तस्मिन् गजयूथे शशकाः सोद्वेगा गजपादक्षुण्णसमावासाः केचिद् भग्नपादाः अन्ये जर्जरितकलेवराः रुधिरप्लुता अन्ये हतशिशवो बाष्पपिहित-लोचनाः समेत्य मिथो मन्त्रं चक्रुः--अहो विनष्टा वयम्। नित्यमेव एतद् गजयूथमागमिष्यति यतो नान्यत्र जलमस्ति। तत् सर्वेषां नाशो भविष्यति। उक्तञ्च--

स्पृशन्नपि गजो हन्ति जिघ्रन्नपि भुजंगमः।<br>
हसन्नपि नृपो हन्ति मानयन्नपि दुर्जनः॥

तच्चिन्त्यतां कश्चिदुपायः।

तत्रैकः प्रोवाच--गम्यतां देशत्यागेन। किमन्यत्र। उक्तञ्च मनुना व्यासेन च--

त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्।<br>
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्॥<br>
क्षेम्यां सस्यप्रदां नित्यं पशुवृद्धिकरीमपि।<br>
परित्यजेन्नृपो भूमिमात्मार्थमविचारयन्॥

आपदर्थे धनं रक्षेद् दारान् रक्षेद्धनैरपि।
आत्मानं सततं रक्षेद् दारैरपि धनैरपि॥

ततश्चान्ये प्रोचुः—भोः पितृपैतामहं स्थानं न शक्यते सहसा त्यक्तुम्। तत् क्रियतां तेषां कृते काचिद् विभीषिका यत् कथमपि दैवान्न समायान्ति। उक्तञ्च—

निर्विषेणापि सर्पेण कर्त्तव्या महती फटा।
विषं भवतु मा वास्तु फटाटोपो भयंकरः॥

अथान्ये प्रोचुः—यद्येवं ततस्तेषां महत् विभीषिकास्थानमस्ति येन नागमिष्यन्ति। सा च चतुरदूतायत्ता विभीषिका। यतो विजयदत्तो नाम राजा अस्मत्स्वामी शशकश्चन्द्रमण्डले निवसति। तत् प्रेष्यतां कश्चिन्मिथ्या-दूतो यूथाधिपसकाशं यच्चन्द्रस्त्वामत्र ह्रदे आगच्छन्तं निषेधयति, यतोऽस्मत्-परिग्रहोऽस्य समन्ताद् वसति। एवमभिहिते श्रद्धेयवचनात् कदापि निवर्तते।

अथान्ये प्रोचुः—यद्येवं तदस्ति लम्बकर्णो नाम शशकः। स च वचनरचना-चतुरो दूतकर्मज्ञः। स तत्र प्रेष्यतामिति। उक्तञ्च—

साकारो निःस्पृहो वाग्मी नानाशास्त्रविचक्षणः।
परचित्तावगन्ता च राज्ञो दूतः स इष्यते॥

अन्यच्च—

यो मूर्खं लौल्यसम्पन्नं राजद्वारिकमाचरेत्।
मिथ्यावादं विशेषेण तस्य कार्यं न सिध्यति॥

तदन्विष्यतां यद्यस्माद् व्यसनादात्मनां सुनिर्मुक्तिः।

अथान्ये प्रोचुः—अहो युक्तमेतत्। नान्यः कश्चिदुपायोऽस्माकं जीवितस्य। तथैव क्रियताम्। अथ लम्बकर्णो गजयूथाधिपसमीपे निरूपितो गतश्च।

तथानुष्ठिते लम्बकर्णोऽपि गजमार्गमासाद्य अगम्यं स्थलमारुह्य तं गजमुवाच—भो भो दुष्टगज! किमेवं लीलया निःशंकतया अत्र चन्द्रह्रदे आगच्छसि? तन्नागन्तव्यम्, निवृत्यतामिति।

तदाकर्ण्य विस्मितमना गज आह—भोः कस्त्वम्? स आह—अहं [illegible] नाम शशकश्चन्द्रमण्डले वसामि। साम्प्रतं भगवता चन्द्रमसा तत्र [illegible]

प्रहितो दूतः। जानात्येव भवान् यथार्थवादिनो दूतस्य न दोषः करणीयः। दूतमुखा हि राजानः सर्वं एव। उक्तञ्च—

उद्यतेष्वपि शस्त्रेषु बन्धुवर्गवधेष्वपि।
परुषाण्यपि जल्पन्तो वध्या दूता न भूभुजा॥

तच्छ्रुत्वा स आह—भोः शशक! तत् कथय भगवतश्चन्द्रमसः सन्देशं येन सत्वरं क्रियते। स आह—भवता अतीतदिवसे यूथेन सहागच्छता प्रभूताः शशका निपातिताः। तत् किं न वेत्ति भवान् यन्मम परिग्रहोऽयम्? तद् यदि जीवितेन ते प्रयोजनं तदा केनापि प्रयोजनेनात्र ह्रदे नागन्तव्यमिति सन्देशः।

गज आह—अथ क्व वर्तते भगवान् स्वामी चन्द्रः? स आह—अत्र ह्रदे साम्प्रतं शशकानां भवद्‌यूथमथितानां हतशेषाणां समाश्वासनाय समायातस्तिष्ठति। अहं पुनस्तवान्तिकं प्रेषितः। गज आह—यद्येवं तद्दर्शय मे तं स्वामिनं येन प्रणम्यान्यत्र गच्छामि। शशक आह—भोः आगच्छ मया सहैकाकी येन दर्शयामि।

तथानुष्ठिते शशको निशासमये तं गजं ह्रदतीरे नीत्वा जलमध्ये स्थितः चन्द्रबिम्बमदर्शयत्। आह च—भोः, एष नः स्वामी जलमध्ये समाधिस्थस्तिष्ठति, तन्निभृतं प्रणम्य सत्वरं व्रजेति। नोचेत् समाधिभङ्गाद् भूयोऽपि प्रभूतं कोपं करिष्यतीति।

अथ गजोऽपि त्रस्तमनास्तं प्रणम्य पुनर्गमनाय प्रस्थितः। शशकाश्च तद्दिनादारभ्य सपरिवाराः सुखेन स्वेषु स्थानेषु तिष्ठन्ति स्म।

———

## शतबुद्धि-सहस्रबुद्धि-मत्स्यकथा

कस्मिंश्चिज्जलाशये शतबुद्धिः सहस्रबुद्धिश्च द्वौ मत्स्यौ निवसतः स्म। अथ तयोरेकबुद्धिर्नाम मण्डूको मित्रतां गतः। एवं ते त्रयोऽपि जलतीरे कञ्चित्का [illegible]वेलायां सुभाषितगोष्ठीसुखमनुभूय भूयोऽपि सलिलं प्रविशन्ति।

अथ कदाचित्तेषां गोष्ठीगतानां जालहस्ता धीवराः प्रभूतैर्मत्स्यैर्व्यापादितै-र्मस्तके विधृतैरस्तमनवेलायां तस्मिन् जलाशये समायाताः। ततः सलिलाशयं दृष्ट्वा मिथः प्रोचुः—अहो बहुमत्स्योऽयं ह्रदो दृश्यते स्वल्पसलिलश्च। तत् प्रभातेऽत्र आगमिष्यामः। एवमुक्त्वा स्वगृहं गताः। मत्स्याश्च विषण्ण-वदना मिथो मन्त्रं चक्रुः।

ततो मण्डूक आह—भोः शतबुद्धे सहस्रबुद्धे, श्रुतं धीवरोक्तं भवद्भ्याम्। तत् किमत्र युज्यते कर्तुं पलायनमवष्टम्भं वा? यत् कर्त्तुं युक्तं भवति तदादिश्यतामद्य। तच्छ्रुत्वा सहस्रबुद्धिः प्रहस्य प्राह—भो मित्र, मा भैषीर्यतो वचनश्रवणमात्रादेव भयं न कार्यम्। न भेतव्यम्। उक्तञ्च—

सर्पाणाञ्च खलानाञ्च सर्वेषां दुष्टचेतसाम्।
अभिप्राया न सिध्यन्ति तेनेदं वर्तते जगत्॥

तत् तावत् तेषामागमनमपि न संपत्स्यते। भविष्यति वा तर्हि त्वां बुद्धिप्रभावेण आत्मसहितं रक्षयिष्यामि, यतोऽनेकां सलिलगतिचर्यामहं जानामि।

तदाकर्ण्य शतबुद्धिराह—भो युक्तमुक्तं भवता। सहस्रबुद्धिरेव भवान्। अथवा साध्विदमुच्यते—

बुद्धिर्बुद्धिमतां लोके नास्त्यगम्यं हि किञ्चन।
बुद्ध्या यतो हता नन्दाश्चाणक्येनासिपाणयः॥

तथाच—

न यत्रास्ति गतिर्वायो रश्मीनाञ्च विवस्वतः।
तत्रापि प्रविशत्याशु बुद्धिर्बुद्धिमतां सदा॥

ततो वचनश्रवणमात्रादपि पितृपर्यायागतं जन्मस्थानं त्यक्तुं न शक्यते। उक्तञ्च—

न तत् स्वर्गेऽपि सौख्यं स्याद्दिव्यस्पर्शनशोभने।
कुस्थानेऽपि भवेत् पुंसां जन्मनो यत्र सम्भवः॥

तन्न कदाचिदपि गन्तव्यम्। अहं त्वां स्वबुद्धिप्रभावेण रक्षयिष्यामि।

मण्डूक आह—भद्रौ, मम तावदेकैव बुद्धिः पलायनपरा। तदहमन्यं जलाशय-मद्यैव सभार्यो यास्यामि। एवमुक्त्वा स मण्डूको रात्रावेवान्यजलाशयं गतः। धीवरैरपि प्रभात आगत्य जघन्यमध्यमोत्तमजलचरा मत्स्यकूर्ममण्डूककर्कटादयो

गृहीताः। तावपि शतबुद्धिसहस्रबुद्धी सभार्यौ पलायमानौ चिरमात्मानं गतिविशेषविज्ञानै रक्षन्तौ जाले पतितौ व्यापादितौ च। अथापराह्ण-समये प्रहृष्टास्ते धीवराः स्वगृहं प्रति प्रस्थिताः। गुरुत्वाच्चैकेन तेषां शतबुद्धिः शिरसि कृतः। सहस्रबुद्धिः प्रलम्बमानो नीयते। ततश्च वापीकण्ठोपगतेन मण्डूकेन तौ तथा नीयमानौ दृष्ट्वाभिहिता स्वपत्नी—प्रिये, पश्य पश्य—

शतबुद्धिः शिरस्थोऽयं लम्बते च सहस्रधीः।
एकबुद्धिरहं भद्रे क्रीडामि विमले जले॥

---

## शालङ्कायनस्य मुनेराख्यानम्

अस्ति कस्मिंश्चिदधिष्ठाने तपोवने शालङ्कायनो नाम तपोधनो जाह्नव्यां स्नानार्थं गतः। तस्य च सूर्योपस्थानं कुर्व्वतस्तत्र प्रदेशे मूषिका काचित् खरतरनखाग्रपुटेन श्येनेन गृहीता। तां दृष्ट्वा स मुनिः करुणार्द्रहृदयो मुञ्च मुञ्चेति कुर्व्वाणस्तस्य पाषाणखण्डं प्राक्षिपत्, सोऽपि पाषाणखण्ड-प्रहारव्याकुलेन्द्रियो भ्रष्टमूषिको भूमौ निपपात। मूषिकापि भयत्रस्ता कर्त्तव्यमजानती रक्ष रक्षेति जल्पन्ती मुनिचरणान्तिकमुपाविशत्।

श्येनेनापि चेतनां लब्ध्वा मुनिरुक्तः—भो मुने, न युक्तमनुष्ठितम् भवता यदहं पाषाणेन ताडितः। किं त्वमधर्म्मान्न बिभेषि? तत् समर्पय ममैनां मूषिकाम्, नोचेत् प्रभूतम् पातकमवाप्स्यसि। इति ब्रुवाणं श्येनं प्रोवाच सः—भो विहगाधम! रक्षणीयाः प्राणिनां प्राणाः; दण्डनीयाः दुष्टाः। संमाननीयाः साधवः, पूजनीयाः गुरवः, स्तुत्या देवाः। तत् किम् असंबद्धं प्रजल्पसि?

श्येन आह—मुने! न त्वं सूक्ष्मधर्म्मं वेत्सि। इह हि सर्व्वेषां प्राणिनां विधिना सृष्टिं कुर्व्वता आहारोऽपि विनिर्मितः। ततो यथा भवतामन्नं

तथास्माकम् मूषिकादयो विहिताः। तत् स्वाहारकांक्षिणम् मां किं दूषयसि ? उक्तं च—

यद्यस्य विहितं भोज्यं न तत्तस्य प्रदूष्यति।
अभक्ष्ये बहुदोषः स्यात्तस्मात्कार्य्यो न व्यत्ययः॥
भक्ष्यं भक्षयतां श्रेयः अभक्ष्यं तु महदघम्।
तत् कथं मां वृथाचारं त्वं दण्डयितुमर्हसि॥

अपरं मुनीनां न चैष धर्म्मो यतस्तैर्दृष्टमदृष्टम् श्रुतमश्रुतमलौल्यत्वमशत्रुत्वं प्रशस्यते। उक्तं च—

समः शत्रौ च मित्रे च समलोष्टाश्मकाञ्चनः।
सुहृन्मित्रे ह्युदासीनो मध्यस्थो द्वेषबन्धुषु॥
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते।
साधूनां निरवद्यानां सदाचारविचारिणाम्॥
योगी युञ्जीत सततमात्मानं रहसि स्थितः।

तत्त्वमनेन कर्म्मणा भ्रष्टतपाः सञ्जातः। उक्तं च—

मुञ्च मुञ्च पतत्येको मा मुञ्चेति द्वितीयकः।
उभयोः पतनं दृष्ट्वा मौनं सर्व्वार्थसाधनम्॥

---

## ब्रह्मदत्तोपाख्यानम्

कस्मिंश्चिदधिष्ठाने ब्रह्मदत्तो नाम ब्राह्मणः प्रतिवसतिस्म। स च प्रयोजनवशाद् ग्रामे प्रस्थितः स्वमात्राभिहितः—वत्स, कथमेकाकी व्रजसि? तदन्विष्यतां कश्चिद्द्वितीयः सहायः। स आह—अम्ब, मा भैषीः। निरुपद्रवोऽयं मार्गः, कार्य्यवशादेकाकी गमिष्यामि। अथ तस्य तं निश्चयं ज्ञात्वा समीपस्थवाप्याः सकाशात् कर्कटमादाय मात्राभिहितः—वत्स, अवश्यं यदि गन्तव्यं तदेष कर्कटोऽपि सहायः, तदेनं गृहीत्वा गच्छ। सोऽपि

मातुर्वचनादुभाभ्यां पाणिभ्यां तं संगृह्य कर्पूरपुटिकामध्ये निधाय पात्रमध्ये संक्षिप्य शीघ्रं प्रस्थितः।

अथ गच्छन् ग्रीष्मोष्मणा संतप्तः कंचित् मार्गस्थं वृक्षमासाद्य तत्रैव प्रसुप्तः। अत्रान्तरे वृक्षकोटरान्निर्गत्य सर्पस्तत्समीपमागतः। सोऽपि कर्पूरसुगन्धसहज-प्रियत्वात् तं परित्यज्य वस्त्रं विदार्य्याभ्यन्तरगतां कर्पूरपुटिकामतिलौल्याद-भक्षयत्। सोऽपि कर्कटस्तत्रैव स्थितः सन् सर्पप्राणानपाहरत्। ब्राह्मणोऽपि यावत् प्रबुद्धः पश्यति तावत् समीपे कृष्णसर्पो निजपार्श्वे कर्पूरपुटिकोपरि स्थितस्तिष्ठति।

तं दृष्ट्वा व्यचिन्तयत्—कर्कटेनायं हत इति, प्रसन्नो भूत्वाब्रवीत्—भोः, सत्यमभिहितम् मम नात्रा यत् पुरुषेण कोऽपि सहायः कार्य्यो नैकाकिना गन्तव्यम्। ततो मया श्रद्धापूरितचेतसा तद्वचनमनुष्ठितम्। तेनाहं कर्कटेन सर्पव्यापादनाद्रक्षितः। अथवा साध्विदमुच्यते—

मन्त्रे तीर्थे द्विजे देवे दैवज्ञे भेषजे गुरौ।
यादृशी भावना यस्य सिद्धिर्भवति तादृशी॥

एवमुक्त्वासौ ब्राह्मणो यथाभिप्रेतं गतः। अतोऽहं ब्रवीमि—

अपि कापुरुषो मार्गे द्वितीयः क्षेमकारकः।
कर्कटेन द्वितीयेन जीवितं परिरक्षितम्॥

---

## हितोपदेश:

### भैरव-व्याधकथा

आसीत् कल्याणकटकवास्तव्यो भैरवो नाम व्याधः। स चैकदा मृगमन्विष्यमाणो विन्ध्याटवीं गतवान्। ततस्तेन व्यापादितं मृगमादाय गच्छता घोराकृतिः शूकरो दृष्टः। तेन व्याधेन मृगं भूमौ निधाय शूकरः शरेणाहतः। शूकरेणापि घनघोरगर्जनं कृत्वा स व्याधः हतः संश्छिन्नद्रुम इव भूमौ निपपात। यतः—

जलमग्निर्विषं शस्त्रं क्षुद्व्याधिः पतनं गिरेः।
निमित्तं किञ्चिदासाद्य देही प्राणैर्विमुच्यते॥

अथ तयोः पादास्फालनेन सर्पोऽपि मृतः। अथानन्तरं दीर्घरावो नाम जम्बूकः परिभ्रमन्नाहारार्थी तान्मृतान्मृगव्याधसर्पशूकरानपश्यत्। अचिन्तयच्च—'अहो, अद्य महद्भोज्यं मे समुपस्थितम्। अथवा—

अचिन्तितानि दुःखानि यथैवायान्ति देहिनाम्।
सुखान्यपि तथा मन्ये दैवमत्रातिरिच्यते॥

तद्भवतु, एषां मांसैर्मासत्रयं मे सुखेन गमिष्यति।

मासमेकं नरो याति द्वौ मासौ मृगशूकरौ।
अहिरेकं दिनं याति अद्य भक्ष्यो धनुर्गुणः॥

ततः प्रथमबुभुक्षायामिदं निःस्वादु कोदण्डलग्नं स्नायुबन्धनं खादामि' इत्युक्त्वा तथा कृते सति छिन्ने स्नायुबन्धन उत्पतितेन धनुषा हृदि निर्भिन्नः स दीर्घरावः पञ्चत्वं गतः। अतोऽहं ब्रवीमि—

कर्त्तव्यः सञ्चयो नित्यं कर्त्तव्यो नातिसञ्चयः।
पश्य सञ्चयशीलोऽसौ धनुषा जम्बुको हतः॥

———

## मूषिकशावक-व्याघ्रत्वकथा

अस्ति गौतमस्य महर्षेस्तपोवने महातपा नाम मुनिः। तत्र तेन मुनिना काकेन नीयमानो मूषिकशावको दृष्टः। ततः स्वभावदयात्मना तेन मुनिना नीवारकणैः संवर्द्धितः। ततो विडालस्तं मूषिकं खादितुमुपधावति।

तमवलोक्य मूषिकस्तस्य मुनेः क्रोडे प्रविवेश। ततो मुनिनोक्तम्—'मूषिक, त्वं मार्जारो भव।' ततः स विडालः कुक्कुरं दृष्ट्वा पलायते। ततो मुनिनोक्तम्—'कुक्कुराद्बिभेषि। त्वमेव कुक्कुरो भव।'

स च कुक्कुरो व्याघ्राद्बिभेति। ततस्तेन मुनिना कुक्कुरो व्याघ्रः कृतः। अथ तं व्याघ्रं मुनिर्मूषिकोऽयमिति पश्यति। अथ तं मूषिकं दृष्ट्वा व्याघ्रं सर्वे वदन्ति—'अनेन मुनिना मूषिको व्याघ्रतां नीतः।'

एतच्छ्रुत्वा स व्याघ्रोऽचिन्तयत्—'यावदनेन मुनिना स्थीयते तावदिदं मे स्वरूपाख्यानमकीर्त्तिकरं न पलायिष्यते' इत्यालोच्य मूषिकस्तं मुनिं हन्तुं गतः। ततो मुनिना तद् ज्ञात्वा 'पुनर्मूषिको भव' इत्युक्त्वा मूषिक एव कृतः। अतोऽहं ब्रवीमि—

'नीचः श्लाघ्यपदं प्राप्य स्वामिनं हन्तुमिच्छति।
मूषिको व्याघ्रतां प्राप्य मुनिं हन्तुं गतो यथा।'

---

## कङ्कणलुब्धपान्थकथा

दक्षिणारण्ये एको वृद्धव्याघ्रः स्नातः कुशहस्तः कदाचित् सरस्तीरे ब्रूते—भो भोः पान्थाः, इदं सुवर्णकङ्कणं गृह्यताम्। ततो लोभाकृष्टेन केनचित् पान्थेनालोचितम्—भाग्यनैतत् सम्भवति। किन्त्वस्मिन्नात्मसन्देहे प्रवृत्तिर्न विधेया। यतः—

अनिष्टादिष्टलाभेऽपि न गतिर्जायते शुभा।
यत्रास्ते विषसंसर्गोऽमृतं तदपि मृत्यवे॥

किन्तु सर्वत्रार्थार्जने प्रवृत्तिः सन्देह एव। तथा चोक्तम्—

"न संशयमनारुह्य नरो भद्राणि पश्यति।
संशयं पुनरारुह्य यदि जीवति पश्यति॥"

तन्निरूपयामि तावत्। प्रकाशं ब्रूते—कुत्र तव कङ्कणम्? व्याघ्रो हस्तं प्रसार्य्य दर्शयति।

पान्थोऽवदत्—कथं मारात्मके त्वयि विश्वासः?

व्याघ्र उवाच—शृणु रे पान्थ, प्रागेव यौवनदशायामतिदुर्वृत्त आसम्। अनेक-गोमानुषाणां वधान्मे पुत्रा मृता दाराश्च; वंशहीनश्चाहम्। ततः केनचिद् धार्म्मिकेणाहमादिष्टः—दानधर्म्मादिकं चरतु भवान्। तदुपदेशादिदानीमहं स्नानशीलो दाता वृद्धो गलितनखदन्तो न कथं विश्वासभूमिः? यतः—

इज्याध्ययनदानानि तपः सत्यं धृतिः क्षमा।
अलोभ इति मार्गोऽयं धर्म्मस्याष्टविधः स्मृतः॥
तत्र पूर्व्वश्चतुर्वर्गो दम्भार्थमपि सेव्यते।
उत्तरस्तु चतुर्वर्गो महात्मन्येव तिष्ठति॥

मम चैतावान् लोभविरहो येन स्वहस्तस्थमपि सुवर्णकङ्कणं यस्मै कस्मैचिद्दातुमिच्छामि, तथापि व्याघ्रो मानुषं खादतीति लोकापवादो दुर्निवारः। मया च धर्म्मशास्त्राण्यधीतानि। शृणु—

"मरुस्थल्यां यथा वृष्टिः क्षुधार्त्ते भोजनं तथा।
दरिद्रे दीयते दानं सफलं पाण्डुनन्दन॥
प्राणा यथात्मनोऽभीष्टा भूतानामपि ते तथा।
आत्मौपम्येन भूतेषु दयां कुर्व्वन्ति साधवः॥"

त्वं चातीव दुर्गतस्तेन तत्तुभ्यं दातुं सयत्नोऽहम्। तथा चोक्तम्—

"दरिद्रान् भर कौन्तेय, मा प्रयच्छेश्वरे धनम्।
व्याधितस्यौषधं पथ्यं नीरुजस्य किमौषधैः॥"

तदत्र सरसि स्नात्वा सुवर्णकङ्कणं गृहाण।

ततो यावदसौ तद्वचःप्रतीतो लोभात् सरः स्नातुं प्रविशति तावन्महापङ्के निमग्नः पलायितुमक्षमः। पङ्के पतितं दृष्ट्वा व्याघ्रोऽवदत्—अहह! महापङ्के पतितोऽसि,

अतस्त्वामहमत्थापयामि।" इत्युक्त्वा शनैः शनैरुपगम्य तेन व्याघ्रेण धृतः स पान्थोऽचिन्तयत्—

न धर्मशास्त्रं पठतीति कारणं
न चापि वेदाध्ययनं दुरात्मनः।
स्वभाव एवात्र तथातिरिच्यते
यथा प्रकृत्या मधुरं गवां पयः॥

तन्मया भद्रं न कृतं यदत्र मारात्मके विश्वासः कृतः। तथा ह्युक्तम्—

"नदीनां शस्त्रपाणीनां नखिनां शृङ्गिणां तथा।
विश्वासो नैव कर्त्तव्यः स्त्रीषु राजकुलेषु च॥"

अन्यच्च—

"स हि गगनविहारी कल्मषध्वंसकारी
दशशतकरधारी ज्योतिषां मध्यचारी।
विधुरपि विधियोगाद् ग्रस्यते राहुणासौ
लिखितमपि ललाटे प्रोज्झितुं कः समर्थः?"

इति चिन्तयन्नेवासौ व्याघ्रेण व्यापादितः खादितश्च।

---

## बुद्धिबलम्

'उपायेन हि यच्छक्यं न तच्छक्यं पराक्रमैः।
काक्या कनकसूत्रेण कृष्णसर्पो निपातितः॥'

कस्मिंश्चित्तरौ वायसदम्पती निवसतः, तयोश्चापत्यानि तरुकोटरावस्थितेन कृष्णसर्पेण खादितानि। ततः पुनर्गर्भवती वायसी वायसमाह—स्वामिन्! त्यज्यतामयं तरुः, अत्र यावत् कृष्णसर्पस्तावदावयोः सन्ततिः कदाचिदपि न जीविष्यति; यतः—

दुष्टा भार्या, शठं मित्रं, भृत्यश्चोत्तरदायकः।
ससर्पे च गृहे वासो, मृत्युरेव न संशयः॥

वायसो ब्रूते—प्रिये ! न भेतव्यम् ; वारं वारं मयैतस्य महापराधः सोढः, इदानीं पुनर्न क्षन्तव्यः। वायस्याह—कथमनेन बलवता कृष्णसर्पेण सार्द्धं भवान् विग्रहीतुं समर्थः स्यात् ? वायसो ब्रूते—अलमनया चिन्तया ; यतः—

'बुद्धिर्यस्य बलं तस्य, निर्बुद्धेस्तु कुतो बलम् ?
पश्य सिंहो मदोन्मत्तः शशकेन निपातितः ॥'

वायस्याह—कथमेतत् ? वायसः कथयति :—

'अस्ति मन्दरनाम्नि पर्वते दुर्दान्तो नाम सिंहः, स च सर्वदा पशूनां वधं विदधान एवास्ते। ततः सर्वैः पशुभिर्मिलित्वा स सिंहो विज्ञप्तः—देव ! किमर्थं सर्व-पशुवधः क्रियते ? यदि प्रसादो भवति, ततो वयमेव भवदाहारार्थं प्रत्यहमेकैकं पशुमुपढौकयामः। सिंहेनोक्तम्—यद्येतदभिमतं भवताम्, तर्हि भवतु तत्। ततः प्रभृति प्रत्यहमेकैकं पशुमुपकल्पितं भक्षयन्नास्ते।

अथ कदाचित् कस्यापि वृद्ध-शशकस्य वारः समायातः ; ततः सोऽचिन्तयत्—

त्रासहेतोर्विनीतिस्तु क्रियते जीविताशया।
पञ्चत्वं चेद् गमिष्यामि किं सिंहानुनयेन मे ?

तन्मन्दं मन्दमुपगच्छामि। ततः सिंहोऽपि क्षुधापीडितः कोपात् तमुवाच—कुतस्त्वं विलम्बादागतोऽसि ?

शशकोऽब्रवीत्—देव ! नाहमपराद्धः ; आगच्छन् पथि सिंहान्तरेण बलाद्धृतः तस्याग्रे पुनरागमनाय शपथं कृत्वा, स्वामिनं निवेदयितुमत्रागतोऽस्मि। सिंहः सकोपमाह—सत्वरं गत्वा दर्शय मे क्वासौ दुरात्मा तिष्ठति।

ततः शशकस्तं गृहीत्वा गभीर-कूपसमीपं गतः—अत्रागत्य स्वयमेव पश्यतु स्वामीत्युक्त्वा, तस्मिन् कूपजले तस्यैव सिंहस्य प्रतिबिम्बं दर्शितवान्। ततोऽसौ क्रोधाध्मातो दर्पात्तस्योपर्यात्मानं निक्षिप्य पञ्चत्वं गतः।'

अतोऽहं ब्रवीमि—बुद्धिर्यस्य इत्यादि।

वायस्याह—श्रुतं मया ; सम्प्रति यथाकर्त्तव्यं ब्रूहि। वायसोऽवदत्—प्रिये ! अत्रासन्ने सरसि राजपुत्रः प्रत्यहमागत्य स्नाति, स्नानसमये तदङ्गावतारितं तीर्थशिलानिहितं कनकसूत्रं चञ्च्वा धृत्वानीय अस्मिन् कोटरे धारयिष्यसि।

अथ कदाचित् कनकसूत्रं दृषदि संस्थाप्य स्नातुं जलं प्रविष्टे राजपुत्रे वायस्या तदनुष्ठितम् ; अथ कनकसूत्रानुसरणप्रवृत्तै राजपुरुषैस्तत्र तरुकोटरे निरूप्यमाणः कृष्णसर्पो व्यापादितः।

---

## मन्दविष-सर्पकथा

अस्ति जीर्णोद्याने मन्दविषो नाम सर्पः। सोऽतिजीर्णतयाहारमप्यन्वेष्टुमक्षमः सरसस्तीरे पतित्वा स्थितः। ततो दूरादेव केनचिन्मण्डूकेन दृष्टः पृष्टश्च—किमिति त्वमाहारं नान्विष्यसि ? सर्पोऽवदत्—गच्छ भद्र, मम मन्दभाग्यस्य प्रश्नेन किम् ?

ततः सञ्जातकौतुकः स च भेकः—सर्वथा कथ्यताम् इत्याह। सर्पोऽप्याह—भद्र, ब्रह्मपुरवासिनः श्रोत्रियस्य कौण्डिन्यस्य पुत्रो विंशतिवर्षदेशीयः सर्वगुणसम्पन्नो दुर्दैवान्मया नृशंसेन दष्टः। ततः सुशीलनामानं तं पुत्रं मृतमालोक्य मूर्च्छितः कौण्डिन्यः पृथिव्यां लुलोठ। अनन्तरं ब्रह्मपुरवासिनः सर्वे बान्धवास्तत्रागत्योपविष्टाः। तथा चोक्तम्—

उत्सवे व्यसने चैव दुर्भिक्षे राष्ट्रविप्लवे।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः॥

तत्र कपिलो नाम स्नातकोऽवदत्—अरे कौण्डिन्य, मूढोऽसि, तेनैवं विलपसि। शृणु—

क्व गताः पृथिवीपालाः ससैन्यबलवाहनाः।
वियोगसाक्षिणी येषां भूमिरद्यापि तिष्ठति॥

अपरं च—

कायः सन्निहितापायः सम्पदः पदमापदाम्।
समागमाः सापगमाः सर्वमुत्पादि भंगुरम्॥

अतः संसारं विचारयतां शोकोऽयमज्ञानस्यैव प्रपञ्चः। पश्य—

अज्ञानं कारणं न स्याद्वियोगो यदि कारणम्।
शोको दिनेषु गच्छत्सु वर्धतामपयाति किम्? ॥

ततस्तद्वचनं निशम्य प्रबुद्ध इव कौण्डिन्य उत्थायाब्रवीत्—तदलमिदानीं गृहनरकवासेन, वनमेव गच्छामि। कपिलः पुनराह—

वनेऽपि दोषाः प्रभवन्ति रागिणां
गृहेऽपि पञ्चेन्द्रियनिग्रहस्तपः।
अकुत्सिते कर्मणि यः प्रवर्तते
निवृत्तरागस्य गृहं तपोवनम्॥

कौण्डिन्यो ब्रूते—एवमेव। ततोऽहं तेन शोकाकुलेन ब्राह्मणेन शप्तः—अद्यारभ्य मण्डूकानां वाहनं भविष्यसि इति। कपिलो ब्रूते—संप्रत्युपदेशासहिष्णुर्भवान्। शोकाविष्टं ते हृदयम्। तथापि कार्यं शृणु—

संगः सर्वात्मना त्याज्यः स चेत्त्यक्तुं न शक्यते।
स सद्भिः सह कर्त्तव्यः सतां सङ्गो हि भेषजम्॥

एतच्छ्रुत्वा स कौण्डिन्यः कपिलोपदेशामृतप्रशान्तशोकानलो यथाविधि दण्डग्रहणं कृतवान्। अतो ब्राह्मणशापान्मण्डूकान् वोढुमत्र तिष्ठामि।

अनन्तरं तेन मण्डूकेन गत्वा मण्डूकनाथस्य जालपादनाम्नः अग्रे तत् कथितम्। ततोऽसावागत्य मण्डूकनाथस्तस्य सर्पस्य पृष्ठमारूढवान्। स च सर्पस्तं पृष्ठे कृत्वा चित्रपदक्रमं बभ्राम। परेद्यवि चलितुमसमर्थं तं मण्डूकनाथोऽवदत्—किमद्य भवान् मन्दगतिः? सर्पो ब्रूते—देव, आहारविरहादसमर्थोऽस्मि। मण्डूकनाथोऽवदत्—अस्मदाज्ञया मण्डूकान् भक्षय।

ततो गृहीतोऽयं महाप्रसादः इत्युक्त्वा क्रमशो मण्डूकान् खादितवान्। अथो निर्मण्डूकं सरो विलोक्य मण्डूकनाथोऽपि तेन खादितः। अतोऽहं ब्रवीमि—

स्कन्धेनापि वहेच्छत्रून् कार्यमासाद्य बुद्धिमान्।
यथा वृद्धेन सर्पेण मण्डूका विनिपातिताः॥

---

## अविवेकस्य परिणामः

अस्त्युज्जयिन्यां माधवो नाम ब्राह्मणः ; तस्य ब्राह्मणी प्रसूता, सा बाला-पत्यरक्षार्थं ब्राह्मणमवस्थाप्य स्नातुं गता। अथ ब्राह्मणाय राज्ञः पार्वणश्राद्धं दातुमाह्वानमागतम्।

तत् श्रुत्वा ब्राह्मणः सहज-दारिद्र्यादचिन्तयत्—यदि सत्वरं न गच्छामि, तदान्यः कश्चिच्छ्राद्धं ग्रहीष्यति ; उक्तं च—

"आदेयस्य प्रदेयस्य, कर्तव्यस्य च कर्मणः।
क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसम् ॥"

किन्तु शिशोरत्र रक्षकः कोऽपि नास्ति, तत् किं करोमि ? यातु, चिरकाल-पालितममुं सुतनिर्विशेषं नकुलं बालकरक्षार्थं व्यवस्थाप्य गच्छामि। तथा कृत्वा गतः।

ततस्तत्र नकुलेन बालकसमीपमागच्छंस्तूर्णीं कृष्णसर्पो व्यापादितः खण्डितश्च। अथासौ नकुलो ब्राह्मणमायान्तमवलोक्य रक्तविलिप्तमुखपादः सत्वरमुपगम्य तच्चरणयोर्लुलोठ। ततोऽसौ ब्राह्मणस्तं तथाविधं दृष्ट्वा मम पुत्रोऽनेन भक्षित इत्यवधार्य तं व्यापादितवान्। अनन्तरं यावदुपसृत्य पश्यति ब्राह्मणः, तावद् बालकः सुस्थः स्वपिति, सर्पश्च व्यापादितस्तिष्ठति। ततोऽसौ ब्राह्मणः परं विषादमुपगतः।

'योऽर्थतत्त्वमविज्ञाय क्रोधस्यैव वशं गतः।
स तथा तप्यते मूढो ब्राह्मणो नकुलाद् यथा ॥'

---

## अज्ञातकुलशीलो बन्धुः

अस्ति मगधदेशे चम्पकवती नामारण्यानी, तस्यां चिरान्महता स्नेहेन मृगकाकौ निवसतः। स च मृगः स्वेच्छया भ्राम्यन् हृष्टपुष्टाङ्गः केनचिच्छृगालेनावलोकितः।

तं दृष्ट्वा शृगालोऽचिन्तयत्—आः! कथमेतन्मांसं सुललितं भक्षयामि? भवतु, विश्वासं तावदुत्पादयामि; इत्यालोच्योपसृत्याब्रवीत्—मित्र! कुशलं ते? मृगेणोक्तम्—कस्त्वम्?

जम्बूको ब्रूते—क्षुद्रबुद्धिनामा जम्बूकोऽहम्; अत्रारण्ये बन्धुहीनो मृतवदेकाकी निवसामि, इदानीं च त्वां मित्रमासाद्य पुनः सबन्धुर्जीवलोकं प्रविष्टोऽस्मि, अधुना मया तवानुचरेण सर्वथा भवितव्यमिति। मृगेणोक्तम्—एवमस्तु।

ततस्तावदस्तं गते सवितरि भगवति मरीचिमालिनि तौ मृगस्य वासभूमिं गतौ; तत्र चम्पक-वृक्षशाखायां सुबुद्धिनामा काको मृगस्य चिरमित्रं निवसति। तौ दृष्ट्वा काकोऽवदत्—सखे मृग! कोऽयं द्वितीयः? मृगो ब्रूते—जम्बूकोऽयमस्मत्सख्यमिच्छन्नागतः।

काको ब्रूते—मित्र! अकस्मादागन्तुना सह मैत्री न युक्ता, तन्न भद्रमाचरितम्; तथा चोक्तम्—

'अज्ञातकुलशीलस्य वासो देयो न कस्यचित्।
मार्जारस्य हि दोषेण हतो गृध्रो जरद्गवः॥'

तावाहतुः—कथमेतत्? काकः कथयति :—

'अस्ति भागीरथीतीरे गृध्रकूटनाम्नि पर्वते महान् पर्कटीवृक्षः, तस्य कोटरे दैवदुर्विपाकाद् गलितनखनयनो जरद्गवो नाम गृध्रः प्रतिवसति। अथ कृपया तज्जीवनाय तद्वृक्षवासिनः पक्षिणः स्वाहारात् किञ्चित् किञ्चिदुद्धृत्य ददति, तेनासौ जीवति, शावकरक्षां च करोति।

अथ कदाचिद् दीर्घकर्णनामा मार्जारः पक्षिशावकान् भक्षितुं तत्रागतः, ततस्तमायान्तं दृष्ट्वा पक्षिशावकैर्भयार्तैः कोलाहलः कृतः; तत् श्रुत्वा जरद्गवेनोक्तम्—कोऽयमायाति? दीर्घकर्णो गृध्रमवलोक्य सभयमाह—हा हतोऽस्मि! अथवा—

तावद् भयस्य भेतव्यं यावद्भयमनागतम्।
आगतं तु भयं वीक्ष्य प्रतिकुर्याद् यथोचितम्॥

अधुनातिसन्निधाने पलायनमप्यशक्यम्, तद् यथाप्राप्तं भवतु, विश्वासमुत्पाद्यास्य समीपमुपगच्छामि; इत्यालोच्योपसृत्याब्रवीत्—आर्य! त्वामभिवन्दे।

गृध्रोऽवदत्—कस्त्वम्? सोऽवदत्—मार्जारोऽहम्। गृध्रो ब्रूते—दूरमपसर, न चेद्धन्तव्योऽसि मया। मार्जारोऽवदत्—श्रूयतां तावन्मम वचनम्, ततो यद्यहं वध्यस्तदा हन्तव्यः; यतः—

जातिमात्रेण किं कश्चिद्धन्यते पूज्यते क्वचित्?
व्यवहारं परिज्ञाय वध्यः पूज्योऽथवा भवेत्॥

गृध्रो ब्रूते—ब्रूहि किमर्थमागतोऽसि? सोऽवदत्—अहमत्र गङ्गातीरे नित्यस्नायी निरामिषाशी ब्रह्मचर्येण चान्द्रायण-व्रतमाचरंस्तिष्ठामि। यूयं धर्म-ज्ञानरताः प्रेमविश्वासभूमय इति पक्षिणः सर्वे सर्वदा ममाग्रे प्रस्तुवन्ति, अतो भवद्भ्यो विद्यावयोवृद्धेभ्यो धर्मं श्रोतुमिहागतः; भवन्तश्चैतादृशा धर्मज्ञा यन्मामतिथिं हन्तुमुद्यताः। गृहस्थधर्मश्चैषः—

अरावप्युचितं कार्यमातिथ्यं गृहमागते।
छेत्तुः पार्श्वगतां छायां नोपसंहरति द्रुमः॥

किञ्च, यद्यन्नं नास्ति, तदा सुप्रीतेनापि वचसा तावदतिथिः पूज्यः;

तृणानि, भूमिरुदकं, वाक् चतुर्थी च सूनृता।
एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन॥

गृध्रोऽवदत्—मार्जारा हि मांसरुचयो भवन्ति, पक्षिशावकाश्चात्र निवसन्ति, तेनैवं ब्रवीमि। मार्जारोऽप्येवं श्रुत्वा, भूमिं स्पृष्ट्वा कर्णौ स्पृशति, ब्रूते च—मया धर्मशास्त्रं श्रुत्वा वीतरागेणेदं दुष्करं व्रतं चान्द्रायणमध्यवसितम्, यतः परस्परं विवदमानानामपि प्रमाणशास्त्राणामहिंसा परमो धर्म इत्यत्रैकमत्यम्;

सर्वहिंसानिवृत्ता ये नराः सर्वसहाश्च ये।
सर्वस्याश्रयभूताश्च, ते नराः स्वर्गगामिनः॥

एवं विश्वास्य स मार्जारस्तरुकोटरे स्थितः, ततो दिनेषु गच्छत्सु पक्षिशावकानाक्रम्य कोटरमानीय प्रत्यहं खादति। अथ येषामपत्यानि खादितानि, तैः शोकार्तैर्विलपद्भिरितस्ततो जिज्ञासा समारब्धा। तत् परिज्ञाय मार्जारः कोटरान्निःसृत्य बहिः पलायितः, पश्चात् पतत्त्रिभिरितस्ततो निरूपयद्भिस्तत्र तरुकोटरे शावकास्थीनि प्राप्तानि; अनन्तरं चानेनैव जरद्गवेनास्माकं शावकाः खादिता इति निश्चित्य, मिलित्वा तैः पक्षिभिः स गृध्रो व्यापादितः।'

अतोऽहं ब्रवीमि—अज्ञातकुलशीलस्य इत्यादि।

इत्याकर्ण्य स जम्बूकः सकोपमाह—मृगस्य प्रथमदर्शनदिने भवानप्यज्ञातकुलशील एवासीत्, तत् कथं भवता सह तस्य स्नेहानुवृत्तिरुत्तरोत्तरं वर्धते ?

अयं निजः परो वेति गणना लघुचेतसाम् ।
उदारचरितानां तु वसुधैव कुटुम्बकम् ।।

यथा चायं मगो मम बन्धुस्तथा भवानपि । मृगोऽब्रवीत्—किमनेनोत्तरेण ? सकलैरत्र विश्रम्भालापैः सुखमनुभवद्भिः स्थीयताम् । काकेनोक्तम्—एवमस्तु ।

अथ प्रातः सर्वे यथाभिमतदेशं गताः । एकदा निभृतं शृगालो ब्रूते—सखे मृग ! एतस्मिन्नेव वनैकदेशे शस्यपूर्णं क्षेत्रमस्ति, तदहं त्वां तत्र नीत्वा दर्शयामि । तथा कृते सति, मृगः प्रत्यहं तत्र गत्वा शस्यं खादति, ततो दिनकतिपयेन क्षेत्रपतिना तद् दृष्ट्वा पाशास्तत्र योजिताः । अनन्तरं पुनरागतो मृगस्तत्र चरन् पाशैर्बद्धोऽचिन्तयत्—को मामितः कालपाशादिव व्याधपाशात् त्रातुं मित्रादन्यः समर्थः ?

अनन्तरं स जम्बूकस्तत्रागत्योपस्थितोऽचिन्तयत्—फलितस्तावदस्माकं कपटः प्रबन्धः, मनोरथसिद्धिरपि बाहुल्यान्मे भविष्यति । यत एतस्योत्कृत्यमानस्य मांसासृगनुलिप्तानि अस्थीनि मयावश्यं प्राप्तव्यानि । स च मृगस्तं दृष्ट्वोल्लासितो ब्रूते—सखे ! छिन्धि तावन्मम बन्धनम्, सत्वरं त्रायस्व माम् ; यतः—

उत्सवे, व्यसने चैव, दुर्भिक्षे, राष्ट्रविप्लवे ।
राजद्वारे, श्मशाने च यस्तिष्ठति स बान्धवः ।।

जम्बूकः पाशं मुहुर्मुहुर्विलोक्याचिन्तयत्—दृढबन्धनबद्धोऽस्ति तावदयं मृगः, ब्रूते च—सखे ! स्नायुनिर्मिता एते पाशाः, तदद्य भट्टारकवारे कथमेतान् दन्तैः स्पृशामि ? मित्र ! नान्यथा मन्तव्यम्, प्रभाते यत् त्वया वक्तव्यं तत् कर्त्तव्यमिति ।

अनन्तरं स काकः प्रदोषकाले मृगमनागतमवलोक्य इतस्ततोऽन्विष्यंस्तथाविधं दृष्ट्वोवाच—सखे ! किमेतत् ? मृगेणोक्तम्—अवधीरित-सुहृद्वाक्यस्य फलमेतत् । काको ब्रूते—स वञ्चकः क्वास्ते ? मृगेणोक्तम्—मन्मांसार्थी तिष्ठत्यत्रैव । काको ब्रूते—मित्र ! उक्तमेव मया पूर्वम् । ततः काको दीर्घं निश्वस्याह—अरे वञ्चक ! किं त्वया पापकर्मणा कृतम् ?

उपकारिणि विश्रब्धे शुद्धमतौ यः समाचरति पापम्।
तं जनमसत्यसन्धं भगवति वसुधे! कथं वहसि?

अथ प्रभाते क्षेत्रपतिर्लगुडहस्तस्तं प्रदेशमागच्छन् काकेनावलोकितः। तमालोक्य काकेनोक्तम्—सखे मृग! त्वमात्मानं मृतवत् सन्दर्श्य, वातेनोदरं पूरयित्वा, पादान् स्तब्धीकृत्य तिष्ठ, यदाहं शब्दं करोमि, तदा त्वं सत्वरमुत्थाय पलायिष्यसे। मृगस्तथैव काकवचनेन स्थितः।

ततः क्षेत्रपतिना हर्षोत्फुल्ललोचनेन तथाविधो मृग आलोकितः, आलोक्य चासौ—आः! स्वयं मृतोऽसि इत्युक्त्वा मृगं बन्धनान्मोचयित्वा पाशान् संवरितुं कृतयत्नो बभूव। ततः कियद्दूरेऽन्तरिते क्षेत्रपतौ स मृगः काकस्य शब्दं श्रुत्वा ससम्भ्रमः समुत्थाय पलायितः, तमुद्दिश्य तेन क्षेत्रपतिना प्रकोपात् क्षिप्तेन लगडेन शृगालो व्यापादितः।

---

## मित्रलाभो मित्रभेदश्च

अस्ति दक्षिणापथे सुवर्णवती नाम नगरी, तत्र वर्धमानो नाम बणिङ्महाधनः प्रतिवसति। तस्य प्रभूतेऽपि वित्ते पुनरर्थवृद्धिः करणीयेति मतिर्बभूव, यतः—

अलब्धं चैव लिप्सेत, लब्धं रक्षेदवेक्षया।
रक्षितं वर्धयेत् सम्यग्, वृद्धं तीर्थेषु निक्षिपेत्॥

अवर्धमानश्चार्थः कालेन स्वल्पव्ययेऽप्यञ्जनवत् क्षयं याति, अनुपभुज्यमानश्च निष्प्रयोजन एव; तथा ह्युक्तम्—

"अञ्जनस्य क्षयं दृष्ट्वा, वल्मीकस्य च सञ्चयम्।
अवन्ध्यं दिवसं कुर्याद्दानाध्ययनकर्मभिः॥"

इति सञ्चिन्त्य वर्धमानः सञ्जीवक-नन्दकनामानौ द्वौ वृषभौ धुरि नियोज्य, शकटं नानाविध-द्रव्यपूर्णं कृत्वा, वाणिज्येन काश्मीरान् प्रति चलितः।

अथ गच्छतस्तस्य दुर्गनाम्नि महारण्ये भग्नजानुः सञ्जीवको निपतितः। अथ तं तदवस्थमालोक्य वर्धमानस्तं परित्यज्य प्रस्थितः, सञ्जीवकोऽपि कथमपि

खुरत्रये भरं कुर्वंस्तत्रैव वने स्थितः। ततो दिनेषु गच्छत्सु सञ्जीवकः स्वेच्छाहारादिलाभेन तामरण्यानीं परिभ्रमन् हृष्टपुष्टाङ्गो बलवन्ननाद।

तस्मिन् वने पिङ्गलकनामा सिंहः स्वभुजोपार्जितराज्यसुखमनुभवन्नास्ते। स चैकदा पिपासाकुलितः पानीयं पातुं यमुना-कच्छमगच्छत्, तेन च तत्र सिंहेनाननुभूतं प्रलय-घन-गर्जितमिव सञ्जीवक-नर्दितमश्रावि। तत् श्रुत्वासौ पानीयमपीत्वा सचकितं परावृत्य, स्वस्थानमागत्य, किमिदमित्यालोच्य तूष्णीं स्थितः।

अथ तं तथाविधं दृष्ट्वा करटक-दमनकनामानौ तन्मन्त्रिपुत्रौ शृगालौ मिथो मन्त्रयतः—

दम। करटक! किमित्ययमुदकार्थी स्वामी पानीयमपीत्वा मन्दमवतिष्ठते?

कर। मित्र! मम सम्मतेनास्य सेवैव न क्रियते, तत् किमस्य चेष्टानिरूपणेन? यतोऽनेन राज्ञा अवधीरिताभ्यामावाभ्यां महद्दुःखमनुभूतम्।

दम। तथापि स्वामिचेष्टा-निरूपणं सेवकैः कर्त्तव्यम्।

कर। यः सर्वाधिकारे नियुक्तः प्रधानमन्त्री स करोतु, यतोऽनुजीविना पराधिकारचर्चा न कर्तव्या ; पश्य, पशूनामन्वेषणमस्माकं नियोगः, अतः स्वनियोगस्यैव चर्चा क्रियताम्। (विमृश्य) किन्त्वद्य तयापि चर्चया न प्रयोजनम्, यत आवयोर्भक्षितशेषाहारः प्रचुरस्तिष्ठति।

दम। (सरोषम्) कथम्? आहारमात्रार्थी भवान् नृपं सेवते? अयुक्तमेतत् ; यतः—

> यस्मिन् जीवति जीवन्ति बहवः स तु जीवतु।
> काकोऽपि किं न कुरुते चञ्च्वा स्वोदरपूरणम्?

कर। अथ भवान् किं ब्रवीति?

दम। अयं तावत् स्वामी पिङ्गलकः पानीयमपीत्वा कुतोऽपि भयात् सचकितं परावृत्योपविष्टः।

कर। किं तत्र त्वं जानासि?

दम। किं प्रज्ञावतामविदितमस्ति? उक्तं च—

> "आकारैरिङ्गितैर्गत्या, चेष्टया, भाषणेन च।
> नेत्र-वक्त्र-विकारैश्च लक्ष्यतेऽन्तर्गतं मनः॥"

तदत्र भयप्रस्तावे अहमेनं प्रज्ञाबलेनात्मीयं करिष्यामि, यतः—

यस्य यस्य हि यो भावस्तेन तेन हि तं नरम्।
अनुप्रविश्य मेधावी क्षिप्रमात्मवशं नयेत्॥

कर। अथ तत्र गत्वा किं वक्ष्यसि ?

दम। किमनुरक्तो विरक्तो वा मयि स्वामीति ज्ञास्यामि तावत्, ज्ञात्वा च यथायं ममायत्तो भविष्यति तथा करिष्यामि ; तद् भद्र ! अनुजानीहि, पिङ्गलकसमीपं गच्छामि।

कर। शुभमस्तु, यथाभिप्रेतमनुष्ठीयताम्।

ततो दमनको विस्मित इव पिङ्गलकसमीपं गतः। अथ दूरादेव राज्ञा दृष्टः सादरं प्रवेशितस्तं साष्टाङ्गं प्रणम्योपविष्टः।

पिङ्ग। चिराद् दृष्टोऽसि।

दम। यद्यपि मया सेवकेन श्रीमद्देवपादानां न किञ्चित् प्रयोजनमस्ति, तथापि प्राप्तकालेऽनुजीविना सान्निध्यमवश्यं कर्तव्यमित्यागतोऽस्मि ; यद्यपि स्वामिना चिरावधीरितस्य मे बुद्धिविनाशः शङ्क्यते, तदपि न ; यतः—

कदर्थितस्यापि हि धैर्यवृत्तेर्बुद्धेर्विनाशो न हि शङ्कनीयः।
अधःकृतस्यापि तनूनपातो नाधः शिखा याति कदाचिदेव॥

पिङ्ग। भद्र दमनक ! किमेतत् ? त्वमस्माकं प्रधानामात्यपुत्रः सुधीरियन्तं कालं नीत्वा कुतोऽपि पिशुन-वचनान्नागतोऽसि ? इदानीं यथाभिलषितं ब्रूहि।

दम। देव, पृच्छामि किञ्चित्।

पिङ्ग। उच्यताम्।

दम। उदकार्थी स्वामी पानीयमपीत्वा किमिति विस्मित इवावतिष्ठते ?

पिङ्ग। भद्रमुक्तं त्वया, किन्तु तद्रहस्यं वक्तुमस्माकं विश्वासभूमिरस्ति न कोऽपि, त्वं तु तद्विधः ; ततः शृणु, कथयामि—सम्प्रति वनमिदमपूर्वसत्त्वाधिष्ठितम्, अतोऽस्माकं त्याज्यम् ; तथा च श्रुतस्त्वयाप्यपूर्वः शब्दो महान् ? शब्दानुरूपेण च तस्य प्राणिनो बलेनापि सुमहता भवितव्यम्।

दम। देव! अस्ति तावदयं महान् भयहेतुः शब्दोऽस्माभिरप्याकर्णितः, किन्तु स किम्मन्त्री, यः प्रथमं युद्धं स्वभूमित्यागं वोपदिशति ; अपरञ्च, देव! अस्मिन् कार्यसन्देहे भृत्यानामुपयोग एव ज्ञातव्यः, यतः—

बन्धु-स्त्री-भृत्यवर्गस्य बुद्धेः, सत्त्वस्य चात्मनः।
आपन्निकष-पाषाणे नरो जानाति सारताम्॥

पिङ्ग। भद्र! महती शङ्का मां बाधते।

दम। (स्वगतम्) अन्यथा राज्यसुखं परित्यज्य स्थानान्तरं गन्तुं कथं मां सम्भाषसे? (प्रकाशम्) देव! यावदहं जीवामि, तावद्भयं न कर्तव्यम्; किन्तु करटकादयोऽप्याश्वास्यन्ताम्, यस्मादापत्प्रतिकाराय दुर्लभः पुरुष-समवायः।

ततस्तौ करटक-दमनकौ राज्ञा महाप्रसादेन पूजितौ भयप्रतीकारं प्रतिज्ञाय चलितौ।

कर। सखे दमनक! किं शक्यप्रतीकारोऽयं भयहेतुरशक्यप्रतीकारो वेति न ज्ञात्वा भयोपशमं प्रतिज्ञाय, कथमयं महाप्रसादो गृहीतः? यतोऽनुपकुर्वाणो न कस्याप्युपायनं गृह्णीयात्, विशेषतो राज्ञः।

दम। (विहस्य) मित्र! तूष्णीमास्यताम्; ज्ञातं मया भयकारणम्, बलीवर्देन नर्दितम्; वृषभाश्चास्माकं भक्ष्याः, किं पुनः सिंहस्य!

कर। यद्येवम्, तदा स्वामित्रासः किं तत्रैव नापनीतः?

दम। यदि स्वामित्रासस्तत्रैव मुच्यते, तदा कथमयं महाप्रसाद-लाभः स्यात्?

ततो दमनक-करटकौ सञ्जीवक-समीपं गतौ। तत्र करटकस्तरुतले साटोपमुपविष्टः।

दम। (सञ्जीवकमुपसृत्य) अरे वृषभ! एषोऽहं राज्ञा पिङ्गलकेनारण्य-रक्षार्थं नियुक्तः; सेनापतिः करटकः समाज्ञापयति—सत्वरमागच्छ, नो चेदस्मादरण्याद् दूरमपसर, अन्यथा ते विरुद्धं फलं भविष्यति। न जाने क्रुद्धः स्वामी किं विधास्यति।

सञ्जी। (सभयमुपसृत्य प्रणिपत्य च) सेनापते! किं मया कर्तव्यम्, तदभिधीयताम्।

कर। वृषभ! यद्येवं कानने स्थातुमिच्छा वर्तते, तदा देवपादारविन्दं गत्वा प्रणम।

सञ्जी। तदभयवाचं प्रयच्छ, गच्छामि।

कर। शृणु रे बलीवर्द ! अलमनया शङ्कया, यतः—

तृणानि नोन्मूलयति प्रभञ्जनो
मृदूनि नीचैः प्रणतानि सर्वतः।
समुच्छ्रितानेव तरून् प्रबाधते,
महान् महत्यव करोति विक्रमम् ॥

ततस्तौ सञ्जीवकं नातिदूरे संस्थाप्य पिङ्गलकसमीपं गतौ ; ततो राज्ञा सादरमालोकितौ प्रणम्योपविष्टौ।

पिङ्ग। अपि दृष्टोऽसौ ?

दम। देव ! दृष्टः, यद्देवेनाकर्णितं तत् तथैव ; महाबलोऽसौ देवं द्रष्टुमिच्छति, सज्जीभूयोपविश्यताम्, न भेतव्यम्।

ततः सञ्जीवकमानीय दर्शनं कारितवन्तौ, पश्चात्तौ मृगेन्द्र-वृषभौ तत्र वने चिरमतिप्रणयेन वसतः। अथ कदाचित् तस्य सिंहस्य भ्राता स्तब्धकर्णो नाम सिंहः समायातः, तस्यातिथ्यं कृत्वा पिङ्गलकस्तदाहाराय पशून् हन्तुं चलितः। अत्रान्तरे—

सञ्जी। देव ! अद्य हतमृगाणां मांसानि क्व ?

पिङ्ग। दमनक-करटकौ जानीतः।

सञ्जी। ज्ञायतां किमस्ति नास्ति वा।

पिङ्ग। (विहस्य) नास्त्येव तत्।

सञ्जी। कथम् ! एतावन्मांसं ताभ्यां खादितम् ?

पिङ्ग। खादितम्, व्ययितमवधीरितं च ; प्रत्यहमेष क्रमः।

सञ्जी। कथम् ! श्रीमद्देवपादानामगोचरेणैव क्रियते ?

पिङ्ग। मदीयागोचरेणैव क्रियते।

सञ्जी। नैतदुचितम् ; तथा चोक्तम्—

"नानिवेद्य प्रकुर्वीत भर्तुः किञ्चिदपि स्वयम्।
कार्यमापत्प्रतीकारादन्यत्र जगतीपतेः ॥"

स्तब्ध। (एतदाकर्ण्य) शृणु भ्रातः ! एतौ दमनक-करटकौ सन्धि-विग्रह-कार्याधिकारिणौ न धनाधिकारे नियोक्तव्यौ।

पिङ्ग। अस्ति तावदेवम्, किन्त्वेतौ सर्वथा न मे वचनकरौ।

स्तब्ध। एतत् सर्वथानुचितम् ; यतः—

स्तब्धस्य नश्यति यशो, विषमस्य मैत्री,
नष्टेन्द्रियस्य कुलमर्थपरस्य धर्मः।
विद्याफलं व्यसनिनः, कृपणस्य सौख्यं,
राज्यं प्रमत्तसचिवस्य नराधिपस्य॥

तद्भ्रातः! सर्वथा मद्वचनं क्रियताम्, अयं शस्य-भक्षकः सञ्जीवको भोजनाधिकारे नियुज्यताम्।

तद्वचनात् तथानुष्ठिते सति, पिङ्गलक-सञ्जीवकयोः सर्वबन्धु-परित्यागेन महता स्नेहेन कालोऽतिवर्तते। ततोऽनुजीविनामप्याहारदाने शैथिल्यदर्शनाद् दमनक-करटकावन्योऽन्यं मन्त्रयतः—

दम। किमत्र विधेयम्? आत्मकृतोऽयं दोषः, स्वयंकृते च दोषे परिदेवनमप्यनुचितम्। (विहस्य) मित्र! सहसैव यथानयोः सौहार्दं मया कारितम्, तथा भेदोऽपि कार्यः।

कर। अस्त्वेवम्, किन्त्वनयोर्महान् नैसर्गिकः स्नेहः कथं भेदयितुं शक्यः?

दम। उपायश्चिन्तनीयः ; यदुपायेन शक्यम्, न तत् पराक्रमेण।

कर। यद्येवं तदा गच्छ, शिवास्ते सन्तु पन्थानः।

दम। (पिङ्गलकमुपसृत्य, प्रणम्य) देव! अत्याहितं मन्यमानो निवेदयितुमागतः, यतः—

आपद्युन्मार्गगमने कार्यकालात्ययेषु च।
कल्याणवचनं ब्रूयादपृष्टोऽपि हितो नरः॥

पिङ्ग। (सादरम्) अथ भवान् किं वक्तुमिच्छति?

दम। अयं तावत्सञ्जीवकस्तवोपर्यसदृश-व्यवहारी लक्ष्यते, तथा चास्मत्सन्निधाने स्वामिनः शक्तित्रयनिन्दां कृत्वा राज्यमेवाभिलषति।

एतत् श्रुत्वा पिङ्गलकः सभयं साश्चर्यं तूष्णीं स्थितः।

दम। देव! सर्वामात्य-परित्यागं कृत्वा त्वयैवायं सकल-कार्याधिकारे नियुक्तः, अयं च महान् दोषः ;

यः कुर्यात् सचिवायत्तां श्रियं तद्व्यसने सति।
सोऽन्धवज्जगतीपालः सीदेत् सञ्चारकैर्विना ॥

स च सर्वकार्येषु स्वेच्छातः प्रवर्तते, तदत्र स्वामी प्रमाणम्।

पिङ्ग। (विमृश्य) भद्र! यद्यप्येवम्, तथापि सञ्जीवकेन सह मम महान् स्नेहः; पश्य—

कुर्वन्नपि व्यलीकानि यः प्रियः प्रिय एव सः।
अशेषदोषदुष्टोऽपि कायः कस्य न वल्लभः?

दम। देव! श्रूयताम्, यत्त्वया मूलभृत्यानपास्य अयमागन्तुकः पुरस्कृतः, तन्न भद्रं कृतम्; यदि पुनर्विज्ञापितोऽपि स्वामी मद्वचनं न शृणोति, तदा भृत्यस्य न दोषः; तथा चोक्तम्—

"अप्रियस्यापि पथ्यस्य परिणामः सुखावहः।
वक्ता श्रोता च यत्रास्ते रमन्ते तत्र सम्पदः ॥"

पिङ्ग। महदाश्चर्यम्! यो मयाभयवाचं दत्त्वानीतः, संवर्द्धितश्च, स कथं द्रुह्यति?

दम। देव!

वर्धनं चाथ सम्मानः खलानां प्रीतये कुतः?
फलन्त्यमृतसेकेऽपि न पथ्यानि विषद्रुमाः ॥

पिङ्ग। (स्वगतम्)—

न परस्यापवादेन परेषां दण्डमाचरेत्।
आत्मनावगमं कृत्वा बध्नीयात् पूजयेत वा ॥

(प्रकाशम्) तदा सञ्जीवकः किं प्रत्यादिश्यताम्?

दम। (ससम्भ्रमम्) देव! मा मा, एवं तावत् मन्त्रभेदो जायते।

पिङ्ग। कथमसौ ज्ञातव्यो द्रोहबुद्धिरिति?

दम। यदासौ शृङ्गाग्र-प्रहरणाभिमुखश्चकित इवागच्छति, तदा ज्ञास्यसि स्वामी।

स एवमुक्त्वा मन्दमन्दं सञ्जीवक-समीपमुपसर्पन् विस्मितमिवात्मानमदर्शयत्।

सञ्जी। (सादरम्) भद्र! कुशलं ते?

दम। अनुजीविनां कुतः कुशलम्?

(इत्युक्त्वा दीर्घं निश्वस्योपविष्टः)

सञ्जी। मित्र! मनोगतं सविस्तरं कथ्यताम्।

दम। (सुनिभृतम्) यद्यपि राजविश्वासोऽन्यस्मै न कथनीयः, तथापि भवानस्मदीयात्प्रत्ययादागतः स्थितश्च, तन्मया परलोकार्थिना अवश्यमेव तव हितमाख्येयम्; शृणु, अयं तवोपरि विकृतबुद्धी रहस्येवमुक्तवान्, यत् सञ्जीवकमेव हत्वा स्वपरिवारं तर्पयामि।

सञ्जी। (सविषादम्) कष्टं भोः! किमिदमापतितम्? हतोऽस्मि मन्दभाग्यः!

दम। अलं विषादेन, प्राप्तकालं कार्यमनुष्ठीयताम्।

सञ्जी। किं मयापकृतं राज्ञः? अथवा निर्निमित्तापकारिणो हि राजानः।

दम। अयं तावत् स्वामी वाङ्मधुरो विषहृदयो मया ज्ञायते।

सञ्जी। कष्टं भोः! कथमहं शस्यभक्षकः सिंहेन व्यापादयितव्यः! अयुक्तं च तदाज्ञानुवर्तनम्, तदिदानीं संग्रामे मृत्युरेवाश्रयणीयः। (विमृश्य) भो मित्र! कथमसौ मां जिघांसुरिति ज्ञातव्यः?

दम। यदासौ स्तब्धकर्णः समुद्धतलाङ्गुलः उन्नतचरणो विवृतास्यस्त्वां पश्यति, तदा त्वमपि स्वविक्रमं दर्शयिष्यसि; किन्तु सर्वमेतत् सुगुप्तमनुष्ठातव्यम्, नो चेत्, न त्वं, नाहम्।

ततो दमनकः सिंहसमीपं गत्वा—देव! समागतोऽसौ पापाशयः, तत् सज्जीभूय स्थीयताम्; इत्युक्त्वा पूर्वोक्ताकारं कारयामास। सञ्जीवकोऽप्यागत्य तथाविधं विकृताकारं सिंहं दृष्ट्वा स्वानुरूपं विक्रमं चकार, ततस्तयोः प्रवृत्ते महाहवे सञ्जीवकः सिंहेन व्यापादितः।

पिङ्ग। (सेवकं व्यापाद्य सशोकम्) किं मया दारुणं कर्म कृतम्!

दम। स्वामिन्! कोऽयं नूतनो न्यायः, यदरातिं हत्वा सन्तापः क्रियते? तथा ह्युक्तम्—

"पिता वा, यदि वा भ्राता, पुत्रो वा, यदि वा सुहृत्।
प्राणच्छेदकरा राज्ञा हन्तव्या भूतिमिच्छता॥

क्षमा शत्रौ च मित्रे च यतीनामेव भूषणम्।
अपराधिषु सत्त्वेषु नृपाणां सैव दूषणम्॥"

इति कपटवचनेन दमनकेन सन्तोषितः स्वां प्रकृतिमापन्नः पिङ्गलकः सिंहासने समुपविष्टः।

-------

## महतां व्यपदेशेन कार्य्यसिद्धिः

'व्यपदेशेन महतां सिद्धिः सञ्जायते परा।
शशिनो व्यपदेशेन वसन्ति शशकाः सुखम्॥'

कस्मिश्चिद् वने चतुर्दन्तो नाम महागजो यूथाधिपः प्रतिवसति स्म। तत्र कदाचन महत्यनावृष्टिः सञ्जाता प्रभूतवर्षाणि यावत्। तया तडाग-ह्रद-पल्वल-सरांसि शोषमुपगतानि। अथ तैः समस्तगजैः स गजराजः प्रोक्तः—देव, पिपासाकुला गजकलभा मृतप्राया अपरे गतासवश्च, तदन्विष्यतां कश्चिज्जलाशयो यत्र पयःपानेन स्वस्थतां व्रजन्ति। ततश्चिरं ध्यात्वा तेनाभिहितम्—अस्ति सुमहान् ह्रदः कश्चिद् विविक्ते प्रदेशे स्थलमध्यगतः पातालगङ्गासलिलेन सदैव परिपूर्णः। तत् तत्र गम्यतामिदानीमिति।

अथ तथानुष्ठिते पञ्चरात्रमुपसर्पद्भिः समासादितस्तैः स विमलो ह्रदः। तत्र च यथेच्छं जलमवगाह्यास्तमनवेलायां निष्क्रान्ताः। तस्य च ह्रदस्य समन्तात् शशकबिला असंख्या सुकोमलभूमौ तिष्ठन्ति। तेऽपि समस्तैरपि तैर्गजैरितस्ततो भ्रमद्भिः परिभग्नाः। बहवः शशका भग्नपादशिरोग्रीवा विहिताः, केचिद्मृताः, केचिज्जीवशेषा जाताः।

ततो गते तस्मिन् गजयूथे ते शशकाः सोद्वेगाः करिपादक्षुण्णसमावासाः केचन भग्नपादा अन्ये जर्जरितकलेवरा रुधिरप्लुता अपरे हतशिशवो बाष्पपिहित-लोचनाः समेत्य मिथो मन्त्रं चक्रुः—हा हा! विनष्टा वयम्। हा हा! विनष्टा

वयम्। नित्यमेवैतत् करियूथमागमिष्यति, यतो नान्यत्र जलमस्ति। तत् सर्वेषां नाशो नोऽनिवार्यः। उक्तं च—

"स्पृशन्नपि गजो हन्ति जिघ्रन्नपि भुजंगमः।
हसन्नपि नृपो हन्ति मानयन्नपि दुर्जनः॥"

तत् तूर्णं चिन्त्यतां कोऽप्युपायः। तत्रैकः प्रोवाच—गम्यतां देशत्यागेन। उक्तं च मनुना—

"त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्।
ग्रामं जनपदस्यार्थे चात्मार्थे पृथिवीं त्यजेत्॥"

ततश्चान्ये प्रोचुः—भोः! पितृपैतामहं स्थानं न शक्यते सहसा विहातुम्। तत् क्रियतां तेषां कृते विभीषिका काचित् यत् कथमपि दैवान्न समायान्ति। उक्तं च—

"निर्विषेणापि सर्पेण कर्तव्या महती फटा।
विषं भवतु मा भूद्वा फटाटोपो भयङ्करः॥"

अथान्ये प्रोचुः—यद्येवं ततस्तेषां महद्विभीषिकास्थानमस्ति येन नागमिष्यन्ति। सा च चतुरदूतायत्ता विभीषिका। यतो विजयदत्तो नाम राजास्मत्स्वामी शशकश्चन्द्रमण्डले निवसति, तत् प्रेष्यतां कश्चन मध्यान्नो दूतो यूथाधिपसकाशं यत् "चन्द्रस्त्वामत्र ह्रद आगच्छन्तं निषेधयति, यतोऽस्मत्-परिग्रहोऽस्य समन्ताद् वसति।" एवमभिहिते श्रद्धेयवचनात् कदापि निवर्तते।

अथान्ये प्रोचुः—यद्येवं तदस्ति लम्बकर्णनामा शशकः। स च वचनरचना-चतुरो दूतकर्मकुशलः। प्रेष्यतां तत् स एव तत्र। उक्तं च—

"साकारो निःस्पृहो वाग्मी नानाशास्त्रविचक्षणः।
परचित्तावगन्ता च राज्ञो दूतः स इष्यते॥"

अन्यच्च—

"यो मूर्खं लौल्यसम्पन्नं राजद्वारिकमाचरेत्।
मिथ्यावादं विशेषेण तस्य कार्यं न सिध्यति॥"

तदन्विष्यतां यद्यस्माद्व्यसनादात्मनां सुनिर्मुक्तिः।

अथान्ये प्रोचुः—अहो ! युक्तमेतत्, नान्यः कश्चिदुपायोऽस्माकं जीवितस्य ; तथैव क्रियताम्। ततो लम्बकर्णो गजाधिपसमीपे निरूपितो गतश्च। तथानुष्ठिते लम्बकर्णोऽपि करिमार्गमासाद्य स्थलमगम्यं किञ्चित् समारुह्य तं गजपतिमवाच—भो भो दुष्टगज, किमेवं लीलया निःशङ्कतयात्र चन्द्रह्रदमागच्छसि ? तन्नागन्तव्यम्, निवर्त्यताम् अविलम्बितमेव।

तदाकर्ण्य विस्मितचित्तो गज आह—भोः कस्त्वम् ? स आह—अहं विजयदत्तो नाम शशकश्चन्द्रमण्डले वसामि। साम्प्रतं भगवता चन्द्रमसा तव पार्श्वे प्रहितो दूतः। जानात्येव भवान् यथार्थवादिनो दूतस्य न दोषा ग्रहणीयाः ; दूतमुखा हि राजानः सर्व एव। उक्तं च—

"उद्यतेष्वपि शस्त्रेषु बन्धुवर्गवधेष्वपि।
परुषाण्यपि जल्पन्तो वध्या दूता न भूभुजा॥"

तच्छ्रुत्वा गजपतिराह—भोः शशक, तत् कथय भगवतश्चन्द्रमसः सन्देशं येन सत्वरं क्रियते।

स आह—पूर्वद्युर्भवता यूथेन सहागच्छता प्रभूताः शशका निपातिताः। तत् किं न वेत्ति भवान् यन्मम परिग्रहोऽयम् ? तद्यदि जीवितेन ते प्रयोजनं तदा केनापि प्रयोजनेनाप्यत्र ह्रदे पुनर्नागन्तव्यमिति सन्देशो निशामणेः।

गज आह—अथ क्व वर्तते भगवान् स्वामी चन्द्रः ?

स आह—अत्र ह्रदे साम्प्रतं शशकानां भवद्-यूथ-मथितानां हतशेषाणां समाश्वासनाय समायातस्तिष्ठति, अहं पुनस्तवान्तिकं प्रेषितः।

गज आह—यद्येवं तद्दर्शय मे तं स्वामिनं येन प्रणम्यान्यत्र गच्छामः।

शशक आह—भोः, आगच्छ मया सहैकाकी येन दर्शयामि।

अथ तथानुष्ठिते शशको निशासमये तं गजं ह्रदतीरे नीत्वा जलमध्ये स्थितं चन्द्रबिम्बमदर्शयत्। आह च—भोः, एष नः स्वामी जलमध्ये समाधिस्थस्तिष्ठति। तन्निभृतं प्रणम्य सत्वरं व्रज। नो चेत् समाधिभङ्गाद् भूयोऽपि प्रभूतं कोपं करिष्यति।

ततो गजोऽपि त्रस्तमनास्तं प्रणम्य पुनर्गमनाय प्रस्थितः। शशकाश्च तद्दिनादारभ्य सपरिवाराः सुखेन स्वेषु स्थानेषु तिष्ठन्ति स्म।

---

## वीरवरोपाख्यानम्

अस्ति शोभावती नाम सार्थकनाम्नी काचन नगरी। तत्र शूद्रको नाम महापराक्रमो नानाशास्त्रवित् पूतचरित्रः कोऽपि महीपतिः प्रतिवसति स्म।

अथैकदा वीरवरनामा राजपुत्त्रः कस्मादपि देशाद् राजद्वारमुपागमत्। तेन सह वेदरता नाम तस्य पत्नी, शक्तिधरो नाम सुतः, वीरवती नाम कन्या च समायाताः।

अथासौ प्रतीहारमवदत्—वृत्त्यर्थमागतो राजपुत्त्रोऽस्मि, तन्नय मां स्वामिनः समीपम्। ततो दौवारिको निनाय तं प्रभोः समीपम्। तत्र प्रणामपुरःसरमसौ सविनयं भूपतिमुवाच—यदि सेवकेन मया प्रयोजनं देवस्य तदा निर्दिशतु मद्वर्तनं स्वामी।

राजा प्रोवाच—का ते वृत्तिः ?

वीरवर उवाच—प्रतिदिनं सुवर्णशतचतुष्टयं देव !

राजा—का ते सामग्री ?

वीरवरः—इमौ बाहू, एष खड्गश्च।

राजा—नैतच्छक्यम्।

ततः स राजपुत्त्रः पुनः प्रणम्य भूपतिमामन्त्रयत। तदालोक्य मन्त्रिणोऽवदन्—दिनचतुष्टयस्य वेतनार्पणेन प्रथममवगम्यतां देव स्वरूपमस्य वर्तनार्थिनो राजपुत्त्रस्य, किमुपपन्नमेतद् वेतनं न वेति। कीदृशी गुणवत्ता चास्य लोकोत्तरा तन्निर्णीयतां च स्वामिन् !

अथ मन्त्रिणां वचनात् ताम्बूलदानेन नियोजितोऽसौ राजपुत्त्रो वीरवरो नरपतिना। वर्तनविनियोगश्चास्य सुनिभृतं निरूपितो नरनाथेन।

स च राजपुत्त्रः प्रतिदिनं प्रभाते राजदर्शनादनन्तरं स्ववेतनलब्धस्यार्थस्य यच्छति देवेभ्यो ब्राह्मणेभ्यश्चार्धम्, स्थितस्य चार्धं दरिद्रेभ्यो ददाति, निक्षिपति च तदवशिष्टं भोज्यविलासव्ययार्थं पत्न्या हस्ते। ततो धृतायुधो राजद्वारमहर्निशं सेवते। यदा च राजा स्वयमादिशति तदा याति स्वगृहम्।

अथैकदा कृष्णचतुर्दश्यामर्धरात्रे स राजा शुश्राव करुणरोदनध्वनिमेकम्। ततोऽसौ पप्रच्छ—कोऽत्र द्वारि तिष्ठति ?

वीरवरोऽवदत्—सेवको वीरवरोऽत्र द्वारि वर्तते देव !

राजा—क्रन्दनमनुसर राजपुत्त्र !

वीरवरः—यथादिशति देवः।

ततोऽसौ तद्रोदनस्वरानुसरणक्रमेण प्रचलितः। दयार्द्रचित्तो भूपतिरपि व्यचिन्तयत्—नैष गन्तुमर्हति राजपुत्त्र एकाकी सूचिभेद्ये तिमिरेऽस्मिन्। तदहमपि गच्छामि पृष्ठतोऽस्य, निरूपयामि च किमेतदिति। ततो नरपतिः खड्गपाणि-स्तस्यानुसरणक्रमेण बहिर्निरगच्छन् नगरीद्वारात्।

अथ गच्छता राजपुत्त्रेण बहिर्नगरादारादालोकिता रोदनपरा कापि सुन्दरी दिव्याभरणभूषिता, पृष्टा च तेन—का त्वमम्ब, किमर्थं विरौषि ?

नारी प्रत्युवाच—वत्स, अहमेतस्य भूपालस्य शूद्रकस्य राजलक्ष्मीरस्मि। चिरमेतस्य भुजच्छायायां सुमहता सुखेन निवसामि। साम्प्रतं तु देव्या अपराधेन अद्य प्रभृति तृतीये दिवसे राजा पञ्चत्वं यास्यति, तदाहमनाथा भविष्यामि। तदिदानीं नात्र स्थास्यामीति क्रन्दामि। तदाकर्ण्य बद्धाञ्जलिर्वीरवरोऽवदत्—भगवति, अस्त्यत्र काचित् प्रवृत्तिर्यया भगवत्याः पुनरिह चिरावासो भवति, सुचिरं जीवति च स्वामी ?

राजलक्ष्मीरवदत्—अस्ति वत्स, एकैवात्र प्रवृत्तिः, सा चातीव दुःसाध्या।

साष्टाङ्गं प्रणिपत्य वीरवर आह—अम्ब, कथय, यदि नैकान्ततोऽसाध्या सा प्रवृत्तिर्मानुषस्य भगवति !

राजलक्ष्मीरुवाच—यदि त्वया स्वतनुजस्य शक्तिधरस्य शिरः स्वहस्तेन छित्त्वा सहासवदनेन भगवत्याः सर्वमङ्गलाया उपहारः क्रियेत तदा पुनर्जीविष्यति राजा शूद्रको वर्षाणां शतम्, अहं च सुखं निवत्स्यामि।

ततः सा तत्क्षणादेव गतादृश्यतां तत्सम्मुखम्।

अथ राजपुत्त्रो वीरवरो गत्वा स्वावासं निद्रालसां पत्नीं पुत्रं दुहितरं च प्राबोधयत्। ततस्ते यावत् त्यक्तसुप्तय उपविष्टास्तावत्तेन विवृतोऽखिलराज-लक्ष्मीसंवादः।

ततः शक्तिधरः सानन्दमाह—धन्योऽहमीदृशः स्वामिजीवितरक्षार्थं यस्योप-योगः। तत् कोऽधुना विलम्बस्तात ? एवंविधे कर्मणि विनियोग एतस्य देहस्य परमश्लाघ्यः। यतः—

धनानि जीवितञ्चैव परार्थे प्राज्ञ उत्सृजेत्।
सन्निमित्तो वरं त्यागो विनाशे नियते सति॥

ततः शक्तिधरस्य जननी ब्रवीति—यद्येवमस्मत्कुलोचितं नाचरितव्यं तदा गृहीतराजवर्तनस्य किमिति निस्तारो भवति ?

कन्या वीरवती चावदत्—धन्याहं यस्या ईदृशो जनको भ्राता च। तत् कथं विलम्ब्यते ? एष एव गृहीतस्वामिवर्तनस्य निस्तारोपायः।

ततस्ते सर्वे सर्वमङ्गलाया आयतनमगमन्।

अथ तत्र गतो देव्याः पूजानन्तरं वीरवरोऽवदत्—भगवति ! प्रसीद ; विजयतां महाराजः शूद्रकः, गृह्यतामेष महत्त उपहारः। ततोऽसौ स्वहस्तेन चकर्त मस्तकं स्वपुत्रस्य।

अथ वीरवरोऽचिन्तयत्—कृतो गृहीतस्वामिवर्तनस्य निस्तारो मया स्वपुत्रोत्सर्गेण। अधुना पुत्रहीनस्य मे जीवनं विडम्बनमेव। तत् सर्वथा कृन्तामि स्वमस्तकमपि। इति तेन पातितं स्वशिरः स्वकरस्थखड्गेन। ततस्तस्य पत्न्या दुहित्रा च तदेवाचरितम्।

राजा शूद्रकोऽपि तददृश्य एवालोकयत् तेषां सर्वेषां सर्वमेतदाचरितम्। ततोऽसौ व्यचिन्तयत्—

जायन्ते च म्रियन्ते च मादृशाः क्षुद्रजन्तवः।
अनेन सदृशो लोके न भूतो न भविष्यति॥

तदेतत्परित्यक्तेन मम राज्येनापि किं प्रयोजनम् ? ततस्तेन स्वशिरश्छेदनार्थमुत्क्षिप्तः खड्गो भूपतिना।

अथासौ भगवत्या सर्वमङ्गलया प्रत्यक्षीभूतया राजा करे धृत्वा वारित उक्तश्च—वत्स, प्रसन्ना भवामि ते, अलं साहसेन। नेदानीं राज्यभङ्गस्ते भविष्यति।

देवीं साष्टाङ्गं प्रणिपत्य राजावदत्—भगवति, न मे प्रयोजनं राज्येन जीवितेन वा। यदि मयि कृपा भगवत्या जाता, तदा ममायुःशेषेणापि जीवतु राजपुत्रो वीरवरः सह पुत्रेण पत्न्या दुहित्रा च। अन्यथा मया यथाप्राप्ता गतिर्गन्तव्या जगदम्बे !

भगवत्यवदत्—वत्स, अनेन ते सत्त्वोत्कर्षेण भृत्यवात्सल्येन च परं प्रीतास्मि। तद् गच्छ, विजयी भव। अयमपि सपरिवारो जीवतु राजपुत्र आदर्शचरितो

वीरवरः। तत्क्षणादेव देवी गतादर्शनम्। ततो वीरवरः सपरिवारो लब्ध-जीवितः स्वगृहं गतः। नृपतिरपि सर्वेषामदृश्य एव स्वप्रासादं प्राविशत्।

अथ वीरवरो द्वारस्थः पुनर्भूपालेन पृष्ट उवाच—देव, सा रोदनपरा योषा मद्दर्शनाददृश्या बभूव। न हि कापि वार्तान्या स्वामिन्! ततः परमां प्रीतिं गतो महीपतिस्तस्मै प्रायच्छत् समग्रं कर्णाटप्रदेशं राजपुत्राय वीरवराय।

---

# कादम्बरी

## शबरसेना-वर्णनम्

आसीच्च मे मनसि—अहो मोहप्रायमेतेषां जीवितं साधुजनविर्गाहितं च चरितम्। तथा हि—पुरुषपिशितोपहारे धर्मबुद्धिः। आहारः मधुमांसादिः। श्रमो मृगया। शास्त्रं शिवारुतम्। समुपदेष्टारः कौशिकाः। प्रज्ञा शकुनिज्ञानम्। परिचिताः श्वानः। राज्यं शून्यास्वटवीषु। आपानकमुत्सवः। मित्राणि धनूंषि। सहाया भुजङ्गा इव सायकाः। गीतमुत्सादकारि मुग्धमृगाणाम्। कलत्राणि बन्दीगृहीताः परयोषितः। क्रूरात्मभिः शार्दूलैः सह संवासः। पशुरुधिरेण देवतार्चनम्। मांसेन बलिकर्म। चौर्येण जीवनम्। भूषणानि भुजङ्गमणयः। वनगजमदैरङ्गरागः। यस्मिन्नेव कानने निवसन्ति तदेव उत्खातमूलं कुर्वते।

इति चिन्तयत्येव मयि स शबरसेनापतिः परिजनोपनीतपल्लवासने समुपाविशत्। अन्यतमस्तु शबरयुवा ससम्भ्रममवतीर्य कमलिनीपत्रपुटेन सरसः अम्भः मृणालिकाश्च समुपाहरत्। आपीतसलिलश्च सेनापतिः मृणालिकाः क्रमेण अदशत्। अपगतश्रमश्च उत्थाय शनैः शनैरभिमतं दिगन्तरमयासीत्। एकतमस्तु शबरः तस्मिन्नेव तरुतले मुहूर्तमिव व्यलम्बत।

अन्तरिते च शबरसेनापतौ स शबरः आरुरुक्षुस्तं वनस्पतिम् आ मूलादपश्यत्। उत्क्रान्तमिव तस्मिन् क्षणे शुककुलानामसुभिः। किमिव हि दुष्करमकरुणानाम्। यतः स पादपमारुह्य तस्य वनस्पतेः शाखान्तरेभ्यः कोटरेभ्यश्च शुकशावकानग्रहीत्, अपगतासूंश्च कृत्वा क्षितावपातयत्।

---

## वैशम्पायनस्य राजान्तिकानयनम्

अथ मुहूर्तादिव वैशम्पायनः प्रतीहार्या गृहीतपञ्जरः कञ्चुकिनानुगम्यमानो राजान्तिकमाजगाम। कञ्चुकी राजानं व्यज्ञापयत्—"देव, देव्यो विज्ञापयन्ति 'देवादेशादेष वैशम्पायनः स्नातः कृताहारश्च देवपादमूलं प्रतीहार्या आनीतः'"।

इत्यभिधाय गते च तस्मिन् राजा वैशम्पायनमपृच्छत्—"कच्चिदभिमत-मास्वादितमभ्यन्तरे भवता किञ्चिदशनजातम्?" स प्रत्युवाच—"देव, किं वा नास्वादितम्? कषायमधुरः प्रकामम् आपीतो जम्बूफलरसः। खण्डितानि दाडिमबीजानि। दलितानि स्वेच्छया प्राचीनामलकीफलानि। किं वा प्रलपितेन बहुना? सर्वमेव देवीभिः स्वयमुपनीयमानममृतायते।"

एवंवादिनो वचनमाक्षिप्य नरपतिरब्रवीत्—"आस्तां तावत् सर्वमेव इदम्। अपनयतु नः कुतूहलम्। आवेदयतु भवान् आदितः प्रभृति कार्त्स्न्येन आत्मनो जन्म। कस्मिन् देशे भवान् कथं जातः? केन वा नाम कृतम्? का माता? कस्ते पिता? कथं वेदानामागमः? कथं शास्त्राणां परिचयः? कुतः कलाः समासादिताः? किं जन्मान्तरानुस्मरणम् उत वरप्रदानम्? अथवा विहङ्ग-वेशधारी कश्चिच्छन्नो निवससि? क्व वा पूर्वमुषितम्? कियद् वा वयः? कथं पञ्जरबन्धः? कथं चाण्डालहस्तगमनम्? इह वा कथमागमनमिति।"

वैशम्पायनस्तु अवनिपतिना पृष्टो मुहूर्तमिव ध्यात्वा सादरमब्रवीत्—"देव, महतीयं कथा। यदि कौतुकमाकर्ण्यताम्।"

---

## अनपत्यताविषादः

विरतवचनायां तस्यां भूमिपालस्तूष्णीं मुहूर्तमिव स्थित्वा दीर्घमुष्णञ्च निश्वस्य निजगाद—"देवि, किमत्र क्रियतां, दैवायत्ते वस्तुनि। अतिमात्रमलं रुदितेन। न वयमनुग्राह्याः प्रायो देवतानाम्। आत्मजपरिष्वङ्गसुखस्य नूनम-भाजनमस्माकं हृदयम्। अन्यस्मिन् जन्मनि न कृतमवदातं कर्म। जन्मान्तरकृतं

हि कर्म फलमुपनयति पुरुषस्य इह जन्मनि। न हि शक्यं दैवमन्यथाकर्तुम् अभियुक्तेनापि।

"यावत्तु मानुष्यके शक्यमुपपादयितुं तावत् सर्वमुपपाद्यताम्। अधिकां कुरु देवि गुरुषु भक्तिम्। द्विगुणामुपपादय देवतासु पूजाम्। ऋषिजनपरिचर्यासु दर्शितादरा भव। परं हि दैवतमृषयः यत्नेनाराधिता अतिदुर्लभानामपि वराणां दातारो भवन्ति। श्रूयते हि पुरा चण्डकौशिकप्रभावाद् बृहद्रथो नाम राजा जरासन्धं नाम तनयं लेभे। दशरथश्च राजा ऋष्यशृङ्गस्य प्रसादादवाप चतुरः पुत्रान्। अमोघफला हि महामुनिसेवा भवति।

"मां दहति अहर्निशम् अनपत्यतासमुद्भवः शोकः। शून्यमिव मे प्रतिभाति जगत्। अफलमिव पश्यामि राज्यम्। अप्रतिविधेये तु विधातरि किं करोमि? तन्मुच्यतां देवि शोकानुबन्धः। आधीयतां धैर्ये धर्मे च धीः।"

इति अभिधाय सलिलमादाय स्वयं करतलेन साश्रुलेखमाननमस्या ममार्ज। पुनः पुनश्च प्रियशतमधुराभिर्वाग्भिराश्वास्य सुचिरं स्थित्वा नरेन्द्रो निर्जगाम। निर्गते च तस्मिन् विलासवती दिवसव्यापारमन्वतिष्ठत्। ततः प्रभृति सुतरां देवताराधनेषु ब्राह्मणपूजासु गुरुजनपरिचर्यासु च आदरवती बभूव। सिद्धायतनानि सिषेवे। अश्वत्थप्रभृतीन् वनस्पतीन् ववन्दे। अनवरतवाच्यमानाः पुण्यकथाः शुश्राव।

गच्छति च काले कदाचिद् राजा स्वप्ने विलासवत्या आनने प्रविशन्तं शशिनमद्राक्षीत्। प्रबुद्धश्च शुकनासाय तं स्वप्नमकथयत्।

स तं प्रत्युवाच—"अद्य खलु मयापि निशि स्वप्ने धौतधवलवाससा शान्तमूर्त्तिना दिव्याकृतिना द्विजेन विकचं चन्द्रकलावदातदलशतं पुण्डरीकमुत्सङ्गे देव्या मनोरमाया निहितं दृष्टम्। आवेदयन्ति हि प्रत्यासन्नमानन्दमप्रजातानि शुभानि निमित्तानि। किञ्च अन्यदानन्दकारणमतो भविष्यति? अवितथफला हि प्रायो निशावसानसमयदृष्टा भवन्ति स्वप्नाः। सर्वथा नचिरेणैव मान्धातारमिव धौरेयं राजर्षीणां भुवनानन्दहेतुमात्मजं जनयिष्यति देवी।" इत्येवमभिदधानमेव तं करेण गृहीत्वा नरेन्द्रः प्रविश्याभ्यन्तरमुभाभ्यां ताभ्यां स्वप्नाभ्यां विलासवतीमानन्दयाञ्चकार।

---

# द्वात्रिंशत्पुत्तलिका

## जयपालोपाख्यानम्

अभूद् विशालायां नगर्य्यां नन्दो नाम राजा महाशौर्य्यपरः। स निजभुजबलेन सर्वान् प्रत्यर्थिनृपतीन् पादपद्मोपजीविनो विधाय एकच्छत्रेण राज्यं करोति स्म। तस्य राज्ञः जयपालनामा पुत्र आसीत्। एकदा राजकुमार आखेटार्थं वनं प्रति निर्गतः। निर्गमनसमये निर्घातादिर्महान् अपशकुनोऽभूत्। मन्त्रिपुत्रेण निवारितोऽपि तद्वचनमनादृत्य राजपुत्रो निर्गतः। पुनस्तेन मन्त्रिपुत्रेण भणितम्—"भो जयपाल! तव विनाशकालः समायातः। अन्यथा एवंबुद्धिर्नोत्पद्यते। उपार्जितानां कर्म्मणामुपभोगं विना कथं विनाशः स्यात्?"

ततो राजकुमारो वनं गत्वा बहून् श्वापदान् व्यापाद्य कृष्णसारं दृष्ट्वा तदनुगतो महदरण्यं प्रविष्टो यावत् पश्यति तावत् सर्व्वोऽपि सैन्यवर्गो नगरमार्गे लग्नः। कृष्णसारोऽपि तत्रादृश्यो जातः। स्वयमेकाकी तुरगारूढः सरोवरस्य अग्रे वनमपश्यत्। तत्र अश्वादवतीर्णो वृक्षशाखायामश्वं निबध्य जलपानं विधाय यावद् वृक्षाधस्थच्छायायामुपविशति तावदतिभयङ्करः कश्चिद् व्याघ्रः समागतः। तं व्याघ्रं दृष्ट्वाश्वो बन्धनं त्रोटयित्वा पलायमानो नगरमार्गमगमत्। राजकुमारोऽपि भयाद् वेपमानः शाखामवलम्ब्य वृक्षमारूढं भल्लूकं दृष्ट्वा पुनरत्यन्तं भयं प्राप्तः।

अथ तेन भल्लूकेन भणितम्—"भो राजकुमार, त्वं मा भैषीः। अद्य मम शरणागतस्त्वम्, अतएवाहं किमप्यनिष्टं न करिष्यामि। मां विश्वस्य व्याघ्रादपि न भेतव्यम्।" राजकुमारेण भणितम्—"भो ऋक्षराज! अहं तव शरणागतः, विशेषतो भयभीतः। अतो महत् पुण्यं शरणागतरक्षणाद् भवति।"

तदा व्याघ्रोऽपि वृक्षाधः समायातः। ततः सूर्य्योऽप्यस्तं गतः। रात्रावतिश्रान्तं राजपुत्रं यावत् निद्रा समायाति तावद् भल्लूकेनोक्तम्—"वृक्षाधः

पतिष्यति, एहि ममाङ्के निद्रां कुरु। एवमुक्तो भल्लूकस्य अङ्के निद्रां गतो राजपुत्रः। तदा व्याघ्रो वदति—भो भल्लूक! अयं ग्रामवासी पुनरपि मृगयायामस्मान् निहनिष्यति। शत्रुरयं किमर्थमङ्के निवेशितः? यतोऽयं मानुषः।

मानुषेषु कृतं नास्ति तिर्य्यग्योनिषु यत् कृतम्।

त्वयोपकृतोऽपि अयमपकारमेव करिष्यति, तस्मादमुमधः पातय। अहमेनं भक्षयित्वा सुखेन गमिष्यामि। त्वमपि निजाश्रमं गच्छ।

भल्लूकेनोक्तम्—

विश्वासघातकाश्चैव शरणागतघातकाः।
वसन्ति नरके घोरे यावदाहूतसंप्लवम्॥

यादृशोऽपि भवतु, परं शरणागतं न पातयिष्यामि। सत्पुरुषेण आश्रितानां गुणदोषचिन्ता न कार्य्या। तथा चोक्तम्—

चन्द्रः क्षयी प्रकृतिवक्रतनुर्जडात्मा
दोषाकरो भवति मित्रविपत्तिकाले।
मूर्ध्ना तथापि विधृतः परमेश्वरेण
नैवाश्रितेषु महतां गुणदोषचिन्ता॥

तदनन्तरं राजपुत्रो विनिद्रो जातः। भल्लूकेनोक्तम्—भो राजकुमार, अहं क्षणं निद्रां करिष्यामि, त्वमप्रमत्तस्तिष्ठ। तेनोक्तम्—तथा भवतु, ततो भल्लूको निद्रां गतः। तदा व्याघ्रेणोक्तम्—भो राजकुमार, त्वमस्य विश्वासं मा कुरु, यतोऽयं नखायुधः। अयञ्च चलच्चित्तो दृश्यते। तस्मादस्य प्रसादोऽपि भयङ्करः। अयं त्वां मत्तो रक्षित्वा स्वयमत्तुमिच्छति। अतस्त्वममुम् भल्लूकमधः पातय। अहमेनं भक्षयित्वा गमिष्यामि, त्वमपि निजागारं गच्छ।

तत् श्रुत्वा राजपुत्रो यावत् तमधः पातयति तावद् भल्लूको वृक्षात् पतनमन्तरा शाखामन्याम् अवलम्बितवान्, अवदच्च—भो पापिष्ठ, पुरार्जितं कर्म त्वया भोक्तव्यमस्ति। तर्हि त्वं 'ससेमिरा' इति वदन् पिशाचो भव।

ततः प्रभातमासीत्। व्याघ्रस्तस्मात् स्थानात् निर्गतः, भल्लूकोऽपि राजकुमारं शप्त्वा निजस्थानमगात्। राजपुत्रस्य तुरगो राजपुत्रेण विना नगरमगमत्। ततो राजा मन्त्रिणा परिवारेण च सह वनं गतो वनमध्ये परिभ्रमन्तं

ससेमिरेति वदन्तं पुत्रं पिशाचीभूतं दृष्ट्वा महाशोकसागरे निमग्नस्तमादाय स्वपुरमगमत्। मणिमन्त्रौषधिज्ञानाहूय तैश्चिकित्सितोऽपि न स स्वस्थो बभूव।

तस्मिन्नवसरे राजा मन्त्रिणमवदत्—भो मन्त्रिन्, शारदानन्दश्चेद-स्थास्यत् तर्हि क्षणमात्रेणामुम् अचिकित्सिष्यत्। स मया अविचार्य्यैव मारितः। अविवेकः परमापदां पदम्। मन्त्रिणोक्तम्—यादृशं भवितव्यं तादृशी बुद्धिरपि जायते। राजाब्रवीत्—यः कोऽपि अस्य चिकित्सां करिष्यति तस्यार्द्धं राज्यं दीयते इति घोषः प्रदातव्यः।

अथैकदा मन्त्रिणा विचिन्त्य कथितम्—मम कापि कन्या वर्त्तते। दर्शनमस्य कार्य्यम्। सा कथमपि उपायं करिष्यति। ततः ससेमिरेति वदति उपविष्टे राजपुत्रे यवनिकान्तःस्थितेन मन्त्रिणा सुगुप्तं रक्षितेन शारदानन्देन पद्यान्येतानि भणितानि :—

सद्भावप्रतिपन्नानां वञ्चने का विदग्धता।<br>अङ्कमारुह्य सुप्तानां हन्तुः किं नाम पौरुषम्॥ १

सेतुं गत्वा समुद्रस्य गङ्गासागरसङ्गमम्।<br>ब्रह्मघाती प्रमुच्येत मित्रद्रोही न मुच्यते॥ २

मित्रद्रोही कृतघ्नश्च यश्च विश्वासघातकः।<br>त्रयस्ते नरकं यान्ति यावदाहूतसंप्लवम्॥ ३

राजासि राजपुत्रोऽसि यदि कल्याणमिच्छसि।<br>देहि दानं द्विजातिभ्यो देवताराधनं कुरु॥ ४

प्रतिपद्यञ्च ससेमिरेतिशब्दस्य चतुर्णामक्षराणां मध्ये आदितः एकैकमक्षरं परित्यक्तम्; राजपुत्रश्च स्वस्थः सावधानश्चाभवत्।

---

## वेतालपुरी-कथा

विक्रमादित्यो राजा पृथिव्यां पर्य्यटन् नगरमेकमगमत्। तत्र नगर-समीपे विमलोदका नदी प्रवहति। नदीतीरे नानाविधतरु-कुसुमफलोप-शोभितं वनमासीत्। तन्मध्ये अतिमनोहरं देवालयमासीत्। राजा तत्र

नदीजले स्नात्वा देवं नमस्कृत्य देवालये उपविष्टः। अत्रान्तरे चत्वारो वैदेशिकाः समागत्य राज्ञः समीपे उपविष्टाः। ततो राजा तानप्राक्षीत्—भोः, यूयं कुतः समागताः? तत्रैकेनोक्तम्—वयमपूर्वदेशादागताः।

राज्ञोक्तम्—तत्र देशे किमपूर्वं दृष्टम्? तेनोक्तम्—तत्र देशे वेतालपुरी नाम पुरी वर्त्तते, तत्र शोणितप्रिया देवता अस्ति। तत्रत्यो महाजनो राजा च प्रतिवत्सरं स्वमनोरथपूरणार्थम् अशुभनिवृत्त्यर्थञ्च तस्मै देवतायै पुरुषोपहारं प्रयच्छति। तस्मिन् दिने यदि कोऽपि वैदेशिकः समायाति तर्हि तमेव देवतायै पशुवत् समर्पयति। वयमपि तस्मिन्नेव दिवसे मार्गवशात् तं नगरं गताः। ततस्तत्रत्या अस्मान् समुद्धर्त्तुं समागताः, तत् श्रुत्वा वयं प्राणान् गृहीत्वा पलाय्य समागताः।

तत् श्रुत्वा राजा विक्रमस्तत्र गत्वा देवतां प्रणमति, भयङ्कराञ्च विलोक्य देवतां स्तौति। स्तुतिं विधाय स रङ्गमण्डपे उपविष्टः। तस्मिन्नवसरे कश्चिद् दीनवदनो महाजनैः सह वाद्यं पुरस्कृत्य समायातः। राजापि तं दृष्ट्वा मनसि विचारयति स्म—अयमेव देवतावलिनिमित्तं महाजनैः समानीतः, ततः अत्यन्त-क्लान्तवदन इव दृश्यते। अस्मिन्नवसरे मम शरीरं दत्त्वा एनं मोचयिष्यामि, इदं शरीरं शतवर्षाणि स्थित्वा सर्वथा नाशमेव यास्यति; अतः शरीरिणां स्वदेह-व्ययेनापि कीर्त्तिर्धर्मश्च उपार्जनीयः। उक्तञ्च—

चला लक्ष्मीश्चलाः प्राणाश्चलो देहोऽथ यौवनम्।
चलाचलश्च संसारः कीर्त्तिर्धर्मश्च निश्चलः॥
अनित्यानि शरीराणि वैभवं नैव शाश्वतम्।
नित्यं सन्निहितो मृत्युः कर्त्तव्यो धर्मसंग्रहः॥

एवं विचार्य्य राजा तान् महाजनान् उवाच—भो महाजनाः, अयं दीनवदनः कुत्र नीयते? तैरुक्तम्—एनं देवतायै बलिनिमित्तं दास्यामः। राज्ञोक्तम्—कस्मात् कारणात्? तैरुक्तम्—देवता अनेन पुरुषोपहारेण तुष्टा सती अस्माकं मनोरथं पूरयिष्यति। राज्ञोक्तम्—भो महाजनाः, अयमत्यन्ताल्पतनुः परं भीतश्च, अस्य शरीरोपहारेण देवतायाः का तृप्तिर्भविष्यति? अतो मां मारयत। इति भणित्वा तं मोचयित्वा राजा स्वयमेव देवतायाः पुरतो गत्वा खड्गं यावत् कण्ठे पातयति तावद्देवतया धृत्वा भणितः—भो महासत्त्व! तव धैर्य्येण परोप-कारकरणेन च सन्तुष्टास्मि, वरं वृणीष्व।

राज्ञोक्तम्—देवि, यदि मम प्रसन्नासि तर्हि अद्यप्रभृति पुरुषमांसोपहारं परित्यज। देवतया "तथास्तु" इति भणितम्। महाजना राजानं वदन्ति स्म—भो राजन्, त्वं स्वसुखनिरभिलाषः सन् द्रुम इव परार्थमेव देहं वहसि। तथाहि—

स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः
प्रतिदिनमथवा ते वृत्तिरेवंविधैव।
अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं
शमयति परितापं छायया संश्रितानाम्॥

अथ राजा तेषामनुज्ञां गृहीत्वा निजनगरमगमत्।—इति कथां कथयित्वा पुत्तलिका भोजमवदत्—भो राजन्, त्वयि एवं धैर्य्यम् औदार्य्यं परोपकारादि-गुणा विद्यन्ते चेत् तर्हि अस्मिन् सिंहासने समुपविश। तत् श्रुत्वा राजा तूष्णीमासीत्।

---

## बुद्धिमत्-संसर्गफलम्

एकदा भोजराजो विहारं कर्त्तुं सकल-राजकुमारैः समवेतस्तत् क्षेत्रसमीपं यावद्गच्छति तावन्मञ्चोपरिस्थितेन केनचित् ब्राह्मणेनोक्तम्—भो राजन्, एतत् क्षेत्रं सम्यक् फलितमस्ति ससैन्यः समागत्य यथेच्छं भुज्यताम्। अश्वेभ्यश्चनका दीयन्ताम्। अद्य मज्जन्म सफलमभूत्, यतो भवान्ममातिथिर्जातः, यत ईदृशः प्रस्तावः सम्पद्यते। तच्छ्रुत्वा स राजा ससैन्यः क्षेत्रमध्ये प्रविष्टः।

अथ ब्राह्मणोऽपि मञ्चकादवरुह्य राजानं क्षेत्रमध्ये स्थितं भणति—भो राजन्! किमयमधर्म्मः क्रियते? इदं ब्राह्मणक्षेत्रं विनाश्यते त्वया! यद्यन्यायः क्रियते तुभ्यं निवेद्यते, त्वमेवान्यायं कर्त्तुं प्रवृत्तः, इदानीं को वा निवारयिष्यति?

ततो राजा यावत् क्षेत्राद्बहिः सपरिवारो निर्गच्छति तावत् पक्षिणः समुत्थाप्य पुनः मञ्चमारुह्य वदति—भो राजन्! किमिति गम्यते? क्षेत्रं साधु

फलितमस्ति। यावनालकदण्डानश्वादयो भक्षयन्तु। उर्व्वारुकफलानि सन्ति उपभुज्यन्ताम्।

पुनर्ब्राह्मणवचनमाकर्ण्य सपरिवारो राजा यावत् क्षेत्रमध्ये प्रविशति तावत् पक्ष्युत्थापनार्थं मञ्चात् अवरुह्य पुनस्तथैवाभवत्। ततो राजा स्वमनसि विचारयति--अहो आश्चर्य्यम्! यदा अयं ब्राह्मणो मञ्चमारोहति तदास्य चेतसि दातव्यं भोक्तव्यमिति बुद्धिरुत्पद्यते। यदा अवतरति तदा दीन-बुद्धिर्भवति, तदहं मञ्चमारुह्य पश्यामीति मञ्चमारुरोह।

भोजराजस्य चेतसि तदा वासना एवमभूत्—विश्वस्यार्त्तिः परिहरणीया, सर्व्वस्य लोकस्यापि दारिद्र्यं सम्यक् निवारणीयम्, दुष्टा दण्डनीयाः, सज्जनाः पालनीयाः, प्रजा धर्म्मेण रक्षणीयाः। किं बहुना, अस्मिन् समये यदि कश्चिच्छरीरमपि प्रार्थयिष्यति तदपि देयमिति आनन्दपरिपूर्णः पुनर्विचारयति— अहो एतत् क्षेत्रमस्य एवंविधा बुद्धिमुत्पादयति। उक्तञ्च—

जले तैलं खले गुह्यं पात्रे दानं मनागपि।
प्राज्ञे शास्त्रं स्वयं याति विस्तारं वस्तुशक्तितः॥

कथमेतत् क्षेत्रस्य माहात्म्यं ज्ञायत इति विचार्य्य ब्राह्मणमाहूयाबादीत्— भो ब्राह्मण, तवैतस्मात् क्षेत्रात् कियाल्लाँभो भवति?

ब्राह्मणेनोक्तम्—भो राजन्, सकलकुशलेन त्वया अविदितं किमपि नास्ति। यदर्हति तत् करोतु। राजा नाम साक्षाद्विष्णोरवतारभूतः, तस्य दृष्टिर्यस्योपरि पतति तस्य दैन्यदुर्भिक्षादयो नश्यन्ति। राजा नाम साक्षात् कल्पवृक्षः। स त्वं मम दृष्टेर्गोचरोऽभूः—अद्य मम दैन्यदरिद्रतादीनामवसानं जातम्, क्षेत्रं कियत्।

ततो राजा तं ब्राह्मणं धनधान्यादिना परितोष्य तत् क्षेत्रं गृहीत्वा मञ्चकाधः खानयितुं प्रारम्भमकार्षीत्। पुरुषप्रमाणे गर्त्ते जाते शिलैका सुमनोहरा अव-लोकिता। तदधः चन्द्रकान्तशिलाविनिर्म्मितं नानारत्नखचितं द्वात्रिंशत्-पुत्तलिकाभिर्युक्तमतिरमणीयं दिव्यमेकं सिंहासनमपश्यत्। तत् सिंहासनं दृष्ट्वा भोजराजः परमानन्दलहरीपरिपूर्णहृदयो भूत्वा सिंहासनं ग्रामं प्रति नेतुं यावदुच्चालयति तावदधिकं गुरु भवति नोच्चलति च।

ततो मन्त्रिणमवदत्—भो मन्त्रिन्, किमर्थमेतत् सिंहासनं नोच्चलति? मन्त्रिणोक्तम्—राजन्, एतत् सिंहासनं दिव्यमपूर्व्वं च बलिहोमपूजादिकं विना नोच्चलिष्यति, तव साध्यं च न भविष्यति।

तस्य वचनं श्रुत्वा राजा ब्राह्मणानाहूय तैः सर्व्वमपि विधानं कारितवान्। ततस्तत् सिंहासनं लघु भूत्वा स्वयमेवोच्चलति स्म। तद्दृष्ट्वा राजा मन्त्रिणमुवाच—भो मन्त्रिन्, एतत् सिंहासनं प्रथमं ममासाध्यमभवत्, परन्तु इदानीं तव बुद्धिप्रभावेण मम हस्तगतमासीत्। अहो बुद्धिमतां संसर्गो लाभाय सुखाय च भवति।

---

# रामायणम्

## पादुकाग्रहणम्

तमप्रतिमतेजोभ्यां भ्रातृभ्यां रोमहर्षणम् ।
विस्मिताः सङ्गमं प्रेक्ष्य समवेता महर्षयः ॥ १ ॥
अन्तर्हितास्त्वृषिगणाः सिद्धाश्च परमर्षयः ।
तौ भ्रातरौ महात्मानौ काकुत्स्थौ प्रशशंसिरे ॥ २ ॥
स धन्यो यस्य पुत्रौ द्वौ धर्मज्ञौ धर्मविक्रमौ ।
श्रुत्वा वयं हि सम्भाषामुभाभ्यां स्पृहयामहे ॥ ३ ॥

ततस्त्वृषिगणाः क्षिप्रं दशग्रीववधैषिणः ।
भरतं राजशार्दूलमित्यूचुः सङ्गता वचः ॥ ४ ॥
"कुलेजात महाप्राज्ञ महावृत्त महायशः ।
ग्राह्यं रामस्य वाक्यं ते पितरं यद्यवेक्षसे ॥ ५ ॥
सदानृणमिमं रामं वयमिच्छामहे पितुः ।
अनृणत्वाच्च कैकेय्याः स्वर्गं दशरथो गतः" ॥ ६ ॥
एतावदुक्त्वा वचनं गन्धर्वाः समहर्षयः ।
राजर्षयश्चैव तदा सर्वे स्वां स्वां गतिं गताः ॥ ७ ॥

ह्लादितस्तेन वाक्येन शुभेन शुभदर्शनः ।
रामः संहृष्टवदनस्तानृषीनभ्यपूजयत् ॥ ८ ॥
त्रस्तगात्रस्तु भरतः स वाचा सज्जमानया ।
कृताञ्जलिरिदं वाक्यं राघवं पुनरब्रवीत् ॥ ९ ॥

"राजधर्ममनुप्रेक्ष्य कुलधर्मानुसन्ततिम् ।
कर्तुमर्हसि काकुत्स्थ मम मातुश्च याचनाम् ॥ १० ॥
रक्षितुं सुमहद् राज्यमहमेकस्तु नोत्सहे ।
पौरजानपदांश्चापि रक्तान् रञ्जयितुं तथा ॥ ११ ॥

ज्ञातयश्च हि योधाश्च मित्राणि सुहृदश्च नः।
त्वामेव प्रतिकाङ्क्षन्ते पर्जन्यमिव कर्षकाः॥ १२॥
इदं राज्यं महाप्राज्ञ स्थापय प्रतिपद्य हि।
शक्तिमानसि काकुत्स्थ लोकस्य परिपालने"॥ १३॥
इत्युक्त्वा न्यपतद् भ्रातुः पादयोर्भरतस्तदा।
भृशं संप्रार्थयामास राममेव प्रियंवदः॥ १४॥

तमङ्के भ्रातरं कृत्वा रामो वचनमब्रवीत्।
श्यामं नलिनपत्राक्षं मत्तहंसस्वरः स्वयम्॥ १५॥
"आगता त्वामियं बुद्धिः स्वजा वैनयिकी च या।
भृशमुत्सहसे तात रक्षितुं पृथिवीमपि॥ १६॥
अमात्यैश्च सुहृद्भिश्च बुद्धिमद्भिश्च मन्त्रिभिः।
सर्वकार्याणि संमन्त्र्य सुमहान्त्यपि कारय॥ १७॥
लक्ष्मीश्चन्द्रादपेयाद्वा हिमवान् वा हिमं त्यजेत्।
अतीयात् सागरो वेलां न प्रतिज्ञामहं पितुः॥ १८॥
कामाद्वा तात लोभाद्वा मात्रा तुभ्यमिदं कृतम्।
न तन्मनसि कर्त्तव्यं वर्तितव्यञ्च मातृवत्"॥ १९॥

एवं ब्रुवाणं भरतः कौशल्यासुतमब्रवीत्।
"तेजसादित्यसङ्काशं प्रतिपच्चन्द्रदर्शनम्॥ २०॥
अधिरोहार्य पादाभ्यां पादुके हेमभूषिते।
एते हि सर्वलोकस्य योगक्षेमं विधास्यतः"॥ २१॥

सोऽधिरुह्य नरव्याघ्रः पादुके व्यवमुच्य च।
प्रायच्छत् सुमहातेजा भरताय महात्मने॥ २२॥
स पादुके संप्रणम्य रामं वचनमब्रवीत्।
"चतुर्दश हि वर्षाणि जटाचीरधरो ह्यहम्॥
फलमूलाशनो वीर भवेयं रघुनन्दन।
तवागमनमाकाङ्क्षन् वसन् वै नगराद्बहिः।
तव पादुकयोर्न्यस्य राज्यतन्त्रं परन्तप॥ २३-२४॥

चतुर्दशे हि सम्पूर्णे वर्षेऽहनि रघूत्तम।
न द्रक्ष्यामि यदि त्वां तु प्रवेक्ष्यामि हुताशनम्" ॥ २५ ॥
तथेति च प्रतिज्ञाय तं परिष्वज्य सादरम्।
शत्रुघ्नञ्च परिष्वज्य भरतञ्चेदमब्रवीत् ॥ २६ ॥
"मातरं रक्ष कैकेयीं मा रोषं कुरु तां प्रति।
मया च सीतया चैव शस्तोऽसि रघुसत्तम" ॥ २७ ॥
इत्युक्त्वाश्रुपरीताक्षो भ्रातरं विससर्ज ह ॥ २८ ॥

स पादुके ते भरतः प्रतापवान् स्वलंकृते संपरिगृह्य धर्मवित्।
प्रदक्षिणञ्चैव चकार राघवं चकार चैवोत्तमनागमूर्धनि ॥ २९ ॥
अथानुपूर्व्यात् प्रतिनन्द्य तं जनं गुरूंश्च मन्त्रिप्रकृतीस्तथानुजौ।
व्यसर्जयद् राघववंशवर्धनः स्थिरः स्वधर्मे हिमवानिवाचलः ॥ ३० ॥
तं मातरो बाष्पगृहीतकण्ठ्यो दुःखेन नामन्त्रयितुं हि शेकुः।
स त्वेव मातृरभिवाद्य सर्वा रुदन् कुटीं स्वां प्रविवेश रामः ॥ ३१ ॥

---

## मेघनाद-वधः

स हताश्वो महातेजा भूमौ तिष्ठन्निशाचरः।
इन्द्रजित् परमक्रुद्धः संप्रजज्वाल तेजसा ॥ १ ॥
तौ धन्विनौ जिघांसन्तावन्योन्यमिषुभिर्भृशम्।
विजयेनाभिनिष्क्रान्तौ वने गजवृषाविव ॥ २ ॥
निवर्हयन्तश्चान्योन्यं ते राक्षसवनौकसः।
भर्तारं न जहुर्युद्धे संपतन्तस्ततस्ततः ॥ ३ ॥

ततस्तान् राक्षसान् सर्वान् हर्षयन् रावणात्मजः।
स्तुन्वानो हर्षमानश्च इदं वचनमब्रवीत् ॥ ४ ॥

"तमसा बहुलेनेमाः संसक्ताः सर्वतो दिशः।
नेह विज्ञायते स्वो वा परो वा राक्षसोत्तमाः ॥ ५ ॥
धृष्टं भवन्तो युध्यन्तु हरीणां मोहनाय वै।
अहं तु रथमास्थाय आगमिष्यामि संयुगम् ॥ ६ ॥
तथा भवन्तः कुर्वन्तु यथेमे काननौकसः।
न युध्येयुर्दुरात्मानः प्रविष्टे नगरं मयि ॥" ७ ॥
इत्युक्त्वा रावणसुतो वञ्चयित्वा वनौकसः।
प्रविवेश पुरीं लङ्कां रथहेतोरमित्रहा ॥ ८ ॥

स रथं भूषयित्वा तु रुचिरं हेमभूषितम्।
प्रासासिशरसंयुक्तं युक्तं परमवाजिभिः ॥ ९ ॥
अधिष्ठितं हयज्ञेन सूतेनाप्तोपदेशिना।
आरुरोह महातेजा रावणिः समितिञ्जयः ॥ १० ॥
स राक्षसगणैर्मुख्यैर्वृतो मन्दोदरीसुतः।
निर्ययौ नगरात्तूर्णं कृतान्तबलचोदितः ॥ ११ ॥
सोऽभिनिष्क्रम्य नगरादिन्द्रजित् परवीरहा।
अभ्ययाज्जवनैरश्वैर्लक्ष्मणं सविभीषणम् ॥ १२ ॥

ततो रथस्थमालोक्य सौमित्री रावणात्मजम्।
वानराश्च महावीर्या राक्षसश्च विभीषणः।
विस्मयं परमं जग्मुर्लाघवात्तस्य धीमतः ॥ १३ ॥
रावणिश्चापि संक्रुद्धो रणे वानरयूथपान्।
पातयामास बाणौघैः शतशोऽथ सहस्रशः ॥ १४ ॥
स मण्डलीकृतधनू रावणिः समितिञ्जयः।
हरीनभ्यहनत् क्रुद्धः परं लाघवमास्थितः ॥ १५ ॥
ते वध्यमाना हरयो नाराचैर्भीमविक्रमैः।
सौमित्रिं शरणं प्राप्ताः प्रजापतिमिव प्रजाः ॥ १६ ॥

ततः समरकोपेन ज्वलितो रघुनन्दनः।
चिच्छेद कार्मुकं तस्य दर्शयन् पाणिलाघवम् ॥ १७ ॥

सोऽन्यत् कार्मुकमादाय सज्यं चक्रे त्वरन्निव।
तदप्यस्य त्रिभिर्बाणैर्लक्ष्मणो निरकृन्तत ॥ १८ ॥
अथैनं छिन्नधन्वानमाशीविषविषोपमैः।
विव्याधोरसि सौमित्री रावणिं पञ्चभिः शरैः ॥ १९ ॥
ते तस्य कायं निर्भिद्य महाकार्मुकनिःसृताः।
निपेतुर्धरणीं बाणा रक्ता इव महोरगाः ॥ २० ॥
स भिन्नवर्मा रुधिरं वमन् वक्त्रेण रावणिः।
जग्राह कार्मुकश्रेष्ठं दृढज्यं बलवत्तरम् ॥ २१ ॥
स लक्ष्मणं समुद्दिश्य परं लाघवमास्थितः।
ववर्ष शरवर्षाणि वर्षाणीव पुरन्दरः ॥ २२ ॥
मक्तमिन्द्रजिता तत्तु शरवर्षमरिन्दमः।
अवारयदसंभ्रान्तो लक्ष्मणः सुदुरासदम् ॥ २३ ॥
दर्शयामास च तदा रावणिं रघुनन्दनः।
असम्भ्रान्तो महातेजास्तदद्भुतमिवाभवत् ॥ २४ ॥
ततस्तान् राक्षसान् सर्वांस्त्रिभिरेकैकमाहवे।
अविध्यत् परमक्रुद्धः शीघ्रास्त्रं संप्रदर्शयन् ॥ २५ ॥
राक्षसेन्द्रसुतञ्चापि बाणौघैः समताडयत् ॥ २६ ॥
सोऽतिविद्धो बलवता शत्रुणा शत्रुघातिना।
असक्तं प्रेषयामास लक्ष्मणाय बहून् शरान् ॥ २७ ॥
तानप्राप्तान् शितैर्बाणैश्चिच्छेद रघुनन्दनः।
सारथेरस्य च रणे रथिनो रथसत्तमः ॥ २८ ॥
शिरो जहार धर्मात्मा भल्लेनानतपर्वणा।
असूतास्ते हयास्तत्र रथमूहुरविक्लवाः।
मण्डलान्यभिधावन्तस्तदद्भुतमिवाभवत् ॥ २९ ॥
अमर्षवशमापन्नः सौमित्रिर्दृढविक्रमः।
प्रत्यविध्यद्धयांस्तस्य शरैर्वित्रासयन् रणे ॥ ३० ॥
अमृष्यमाणस्तत् कर्म रावणस्य सुतो बली।
विव्याध दशभिर्बाणैः सौमित्रिं तममर्षणम् ॥ ३१ ॥

ते तस्य वज्रप्रतिमाः शराः सर्पविषोपमाः।
विलयं जग्मुराहत्य कवचं काञ्चनप्रभम्॥ ३२॥
अभेद्यकवचं मत्वा लक्ष्मणं रावणात्मजः।
ललाटे लक्ष्मणं बाणैः सुपुङ्खैस्त्रिभिरिन्द्रजित्।
अविध्यत् परमक्रुद्धः शीघ्रास्त्रञ्च प्रदर्शयन्॥ ३३-३४॥
तैः पृषत्कैर्ललाटस्थैः शुशुभे रघुनन्दनः।
रणाग्रे समरश्लाघी त्रिशृङ्ग इव पर्वतः॥ ३५॥
स तथा ह्यर्दितो बाणै राक्षसेन महामृधे।
तमाशु प्रतिविव्याध लक्ष्मणः पञ्चभिः शरैः॥ ३६॥
विकृष्येन्द्रजितो युद्धे वदने शुभकुण्डले।
लक्ष्मणेन्द्रजितौ वीरौ महाबलशरासनौ।
अन्योन्यं जघ्नतुर्बाणैर्विशिखैर्भीमविक्रमैः॥ ३७॥
ततः शोणितदिग्धाङ्गौ लक्ष्मणेन्द्रजितावुभौ।
रणे तौ रेजतुर्वीरौ पुष्पिताविव किंशुकौ॥ ३८॥
तौ परस्परमभ्येत्य सर्वगात्रेषु धन्विनौ।
घोरैर्विव्यधतुर्बाणैः कृतभावावुभौ जये॥ ३९॥
ततः समरकोपेन संयुक्तो रावणात्मजः।
विभीषणं त्रिभिर्बाणैर्विव्याध वदने शुभे॥ ४०॥
अयोमुखैस्त्रिभिर्विद्ध्वा राक्षसेन्द्रं विभीषणम्।
एकैकेनाभिविव्याध तान् सर्वान् हरियूथपान्॥ ४१॥
तस्मै दृढतरं क्रुद्धो जघान गदया हयान्।
विभीषणो महातेजा रावणेः स दुरात्मनः॥ ४२॥
स हताश्वादवप्लुत्य रथान्निहतसारथेः।
अथ शक्तिं महातेजाः पितृव्याय मुमोच ह॥ ४३॥
तामापतन्तीं संप्रेक्ष्य सुमित्रानन्दवर्धनः।
चिच्छेद निशितैर्बाणैर्दशधा सापतद् भुवि॥ ४४॥
तस्मै दृढधनुः क्रुद्धो हताश्वाय विभीषणः।
वज्रस्पर्शसमान् पञ्च ससर्जोरसि मार्गणान्॥ ४५॥

ते तस्य कायं निर्भिद्य रुक्मपुङ्खा निमित्तगाः।
बभूवुर्लोहिता दिग्धा रक्ता इव महोरगाः॥ ४६॥
स पितृव्याय संक्रुद्धः इन्द्रजिच्छरमाददे।
उत्तमं रक्षसां मध्ये यमदत्तं महाबलः॥ ४७॥
तं समीक्ष्य महातेजा महेषुं तेन संहितम्।
लक्ष्मणोऽप्याददे बाणमन्यं भीमपराक्रमः॥ ४८॥
कुबेरेण स्वयं स्वप्ने तस्मै दत्तं महात्मना।
दुर्जयं दुर्विषह्यञ्च सेन्द्रैरपि सुरासुरैः॥ ४९॥
तयोस्ते धनुषी श्रेष्ठे बाहुभिः परिघोपमैः।
विकृष्यमाणे बलवत् क्रौञ्चाविव चुकूजतः॥ ५०॥
ताभ्यां तौ धनुषि श्रेष्ठे संस्थितौ सायकोत्तमौ।
विकृष्यमाणौ वीराभ्यां भृशं जज्वलतुः श्रिया॥ ५१॥
तौ भासयन्तावाकाशं धनुर्भ्यां विशिखौ च्युतौ।
मुखेन मुखमाहत्य सन्निपेततुरोजसा॥ ५२॥
सन्निपातस्तयोरासीच्छरयोर्घोररूपयोः।
सधूमविस्फुलिङ्गाश्च तज्जोऽग्निर्दारुणोऽभवत्॥ ५३॥
तौ महाग्रहसङ्काशावन्योन्यं सन्निपत्य च।
संग्रामे शतधा यान्तौ मेदिन्यां विनिपेततुः॥ ५४॥
शरौ प्रतिहतौ दृष्ट्वा तावुभौ रणमूर्धनि।
व्रीडितौ जातरोषौ च लक्ष्मणेन्द्रजितौ तदा॥ ५५॥
सुसंरब्धस्तु सौमित्रिरस्त्रं वारुणमाददे।
रौद्रं महेन्द्रजिद् युद्धे व्यसृजद् युधि निष्ठितः।
तेन तद्विहतं त्वस्त्रं वारुणं परमाद्भुतम्॥ ५६-५७॥
ततः क्रुद्धो महातेजा इन्द्रजित् समितिञ्जयः।
आग्नेयं सन्दधे दीप्तं स लोकं संक्षिपन्निव॥ ५८॥
सौरेणास्त्रेण तद्वीरो लक्ष्मणः प्रत्यवारयत्।
अस्त्रं निवारितं दृष्ट्वा रावणिः क्रोधमूर्च्छितः।
आसुरं शत्रुनाशाय घोरमस्त्रं समाददे॥ ५९॥

तस्माच्चापाद् विनिष्पेतुर्भास्वराः कूटमुद्गराः।
शूलानि च भूसुण्ठ्यश्च गदाः खड्गाः परश्वधाः॥ ६० ॥
तद् दृष्ट्वा लक्ष्मणः संख्ये घोरमस्त्रमथासुरम्।
अवार्यं सर्वभूतानां सर्वशत्रुविनाशनम्।
माहेश्वरेण द्युतिमांस्तदस्त्रं प्रत्यवारयत्॥ ६१-६२ ॥

तयोः सुतुमुलं युद्धं संबभूवाद्भुतोपमम्।
गगनस्थानि भूतानि लक्ष्मणं पर्यवारयन्॥ ६३ ॥
भैरवाभिरुते भीमे युद्धे वानररक्षसाम्।
भूतैर्बहुभिराकाशं विस्मितैरावृतं बभौ॥ ६४ ॥
ऋषयः पितरो देवा गन्धर्वा गरुडोरगाः।
शतक्रतुं पुरस्कृत्य ररक्षुर्लक्ष्मणं रणे॥ ६५ ॥

अथान्यं मार्गणश्रेष्ठं सन्दधे राघवानुजः।
हुताशनसमस्पर्शं रावणात्मजदारणम्॥ ६६ ॥
सुपत्रमनुवृत्ताङ्गं सुपर्वाणं सुसंस्थितम्।
सुवर्णविकृतं वीरः शरीरान्तकरं शरम्॥ ६७ ॥
दुरावारं दुर्विषह्यं राक्षसानां भयावहम्।
आशीविषविषप्रख्यं देवसङ्घैः समर्चितम्॥ ६८ ॥
येन शक्रो महातेजा दानवानजयत् प्रभुः।
पुरा दैवासुरे युद्धे वीर्यवान् हरिवाहनः॥ ६९ ॥
तदैन्द्रमस्त्रं सौमित्रिः संयुगेष्वपराजितम्।
शरश्रेष्ठं धनुःश्रेष्ठे नरश्रेष्ठोऽभिसन्दधे॥ ७० ॥
सन्धायामित्रदलनं विचकर्ष शरासनम्।
सज्यमायम्य दुर्धर्षं कालो लोकक्षये यथा॥ ७१ ॥
सन्धाय धनुषि श्रेष्ठे विकर्षन्निदमब्रवीत्।
लक्ष्मीवाल्लँक्ष्मणो वाक्यमर्थसाधकमात्मनः॥ ७२ ॥
"धर्मात्मा सत्यसन्धश्च रामो दाशरथिर्यदि।
पौरुषे चाप्रतिद्वन्द्वस्तदैनं जहि रावणिम्"॥ ७३ ॥

इत्युक्त्वा बाणमाकर्ण विकृष्य तमजिह्मगम्।
लक्ष्मणः समरे वीरः ससर्जेन्द्रजितं प्रति ॥ ७४ ॥
ऐन्द्रास्त्रेण समायोज्य लक्ष्मणः परवीरहा।
स शिरः सशिरस्त्राणं श्रीमज्ज्वलितकुण्डलम्।
प्रमथ्येन्द्रजितः कायात् पातयामास भूतले ॥ ७५ ॥
तद्राक्षसतनूजस्य च्छिन्नस्कन्धं शिरो महत्।
तपनीयनिभं भूमौ ददृशे रुधिरोक्षितम् ॥ ७६ ॥
हतस्तु निपपाताशु धरण्यां रावणात्मजः।
कवची सशिरस्त्राणो विध्वस्तः सशरासनः ॥ ७७ ॥

चुक्रुशुस्ते ततः सर्वे वानराः सविभीषणाः।
हृष्यन्तो निहते तस्मिन् देवा वृत्रवधे यथा ॥ ७८ ॥
अथान्तरिक्षे देवानामृषीणाञ्च महात्मनाम्।
अभिजज्ञे च सन्नादो गन्धर्वाप्सरसामपि ॥ ७९ ॥
पतितं तमभिज्ञाय राक्षसी सा महाचमूः।
वध्यमाना दिशो भेजे हरिभिर्जितकाशिभिः ॥ ८० ॥
वानरैर्वध्यमानास्ते शस्त्राण्युत्सृज्य राक्षसाः।
लङ्कामभिमुखाः सस्रुर्नष्टसंज्ञाः प्रधाविताः ॥ ८१ ॥
दुद्रुवुर्बहुधा भीता राक्षसाः शतशो दिशः।
त्यक्त्वा प्रहरणान् सर्वे पट्टसासिपरश्वधान् ॥ ८२ ॥
केचिल्लङ्कां परित्रस्ताः प्रविष्टा वानरार्दिताः।
समुद्रे पतिताः केचित् केचित् पर्वतमाश्रिताः ॥ ८३ ॥
हतमिन्द्रजितं दृष्ट्वा शयानं समरक्षितौ।
राक्षसानां सहस्रेषु न कश्चित् प्रत्यदृश्यत ॥ ८४ ॥
यथास्तं गत आदित्ये नावतिष्ठन्ति रश्मयः।
तथा तस्मिन्निपतिते राक्षसास्ते गता दिशः ॥८५
शान्तरश्मिरिवादित्यो निर्वाण इव पावकः।
स बभूव महातेजा व्यपास्तगतजीवितः ॥ ८६ ॥

प्रशान्तपीडाबहुलो नष्टारिष्टः प्रतापवान्।
बभूव लोकः पतिते राक्षसेन्द्रसुते तदा॥ ८७॥
हर्षञ्च शक्रो भगवान् सह सर्वैः सुरर्षभिः।
जगाम निहते तस्मिन् राक्षसे पापकर्मणि॥ ८८॥
आकाशे चापि देवानां शुश्रुवे दुन्दुभिस्वनः।
नृत्यद्भिरप्सरोभिश्च गन्धर्वैश्च महात्मभिः।
ववृषुः पुष्पवर्षाणि तदद्भुतमभूत्तदा॥ ८९॥
प्रशशंसुर्हते तस्मिन् राक्षसे क्रूरकर्मणि।
शुद्धा आपो दिशश्चैव जहृषुर्दैत्यदानवाः॥ ९०॥
आजग्मुः पतिते तस्मिन् सर्वलोकभयावहे।
ऊचुश्च सहिताः सर्वे देवगन्धर्वदानवाः॥ ९१॥
विज्वराः शान्तकलुषा ब्राह्मणा विचरन्त्विति।
ततोऽभ्यनन्दन् संहृष्टाः समरे हरियूथपाः॥ ९२॥
तम्प्रतिबलं दृष्ट्वा हतं नैर्ऋतपुङ्गवम्।
विभीषणो हनूमांश्च जाम्बवांश्चर्क्षयूथपः।
विजयेनाभिनन्दन्तस्तुष्टुवुश्चापि लक्ष्मणम्॥ ९३॥
क्ष्वेलन्तश्च नदन्तश्च गर्जन्तश्च प्लवङ्गमाः।
लब्धलक्षा रघुसुतं परिवार्योपतस्थिरे॥ ९४॥
लाङ्गूलानि प्रविध्यन्तः स्फोटयन्तश्च वानराः।
लक्ष्मणो जयतीत्येवं वाक्यं विश्रावयंस्तदा॥ ९५॥
अन्योन्यञ्च समाश्लिष्य कपयो हृष्टमानसाः।
चक्रुरुच्चावचगुणा राघवाश्रयजाः कथाः॥ ९६॥
तदसुकरमथाभिवीक्ष्य हृष्टाः प्रियसुहृदो युधि लक्ष्मणस्य कर्म।
परममुपलभन् मनःप्रहर्षं विनिहतमिन्द्ररिपुं निशम्य देवाः॥ ९७॥

---

# महाभारतम्

## धृतराष्ट्राश्वासनम्*

वैशम्पायन उवाच—

ततोऽमृतसमैर्वाक्यैर्ह्लादयन् पुरुषर्षभम्।
वैचित्रवीर्यं विदुरो यदुवाच निबोध तत्॥ १॥

विदुर उवाच—

उत्तिष्ठ राजन् किं शेषे धारयात्मानमात्मना।
एषा वै सर्वसत्त्वानां लोकेश्वर परा गतिः॥ २॥
सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः।
संयोगा विप्रयोगान्ता मरणान्तञ्च जीवितम्॥ ३॥
यदा शूरञ्च भीरुञ्च यमः कर्षति भारत।
तत् किं न योत्स्यन्ति हि ते क्षत्रियाः क्षत्रियर्षभ॥ ४॥
अयुध्यमानो म्रियते युध्यमानश्च जीवति।
कालं प्राप्य महाराज न कश्चिदतिवर्तते॥ ५॥
अभावादीनि भूतानि भावमध्यानि भारत।
अभावनिधनान्येव तत्र का परिदेवना॥ ६॥
न शोचन् मृतमन्वेति न शोचन् म्रियते नरः।
एवं सांसिद्धिके लोके किमर्थमनुशोचसि॥ ७॥
कालः कर्षति भूतानि सर्वाणि विविधान्युत।
न कालस्य प्रियः कश्चिन्न द्वेष्यः कुरुसत्तम॥ ८॥
यथा वायुस्तृणाग्राणि संवर्तयति सर्वशः।
तथा कालवशं यान्ति भूतानि भरतर्षभ॥ ९॥
एकसार्थप्रयातानां सर्वेषां तत्रगामिनाम्।
यस्य कालः प्रयात्यग्रे तत्र का परिदेवना॥ १०॥

---

* स्त्रीपर्वणि द्वितीयेऽध्याये

6—1693B.T.

न चाप्येतान् हतान् युद्धे राजन् शोचितुमर्हसि।
प्रमाणं यदि शास्त्राणि गतास्ते परमां गतिम्॥ ११॥
सर्वे स्वाध्यायवन्तो हि सर्वे च चरितव्रताः।
सर्वे चाभिमुखाः क्षीणास्तत्र का परिदेवना॥ १२॥
अदर्शनादापतिताः पुनश्चादर्शनं गताः।
न ते तव न तेषां त्वं तत्र का परिदेवना॥ १३॥
हतोऽपि लभते स्वर्गं हत्वा च लभते यशः।
उभयं नो बहुगुणं नास्ति निष्फलता रणे॥ १४॥
तेषां कामदुघाल्लँकानिन्द्रः संकल्पयिष्यति।
इन्द्रस्यातिथयो ह्येते भवन्ति पुरुषर्षभ॥ १५॥
न यज्ञैर्दक्षिणावद्भिर्न तपोभिर्न विद्यया।
स्वर्गं यान्ति तथा मर्त्या यथा शूरा रणे हताः॥ १६॥
शरीराग्निषु शूराणां जुहुवुस्ते शराहुतीः।
हूयमानाञ्छरांश्चैव सेहुस्तेजस्विनो मिथः॥ १७॥
एवं राजंस्तवाचक्षे स्वर्गपन्थानमुत्तमम्।
न युद्धादधिकं किञ्चित् क्षत्त्रियस्येह विद्यते॥ १८॥
क्षत्त्रियास्ते महात्मानः शूराः समितिशोभनाः।
आशिषं परमां प्राप्ता न शोच्याः सर्व एव हि॥ १९॥
आत्मानमात्मनाश्वास्य मा शुचः पुरुषर्षभ।
नाद्य शोकाभिभूतस्त्वं कायमुत्स्रष्टुमर्हसि॥ २०॥
मातापितृसहस्राणि पुत्रदारशतानि च।
संसारेष्वनुभूतानि कस्य ते कस्य वा वयम्॥ २१॥
शोकस्थानसहस्राणि भयस्थानशतानि च।
दिवसे दिवसे मूढमाविशन्ति न पण्डितम्॥ २२॥
न कालस्य प्रियः कश्चिन्न द्वेष्यः कुरुसत्तम।
न मध्यस्थः क्वचित् कालः सर्वं कालः प्रकर्षति॥ २३॥
कालः पचति भूतानि कालः संहरते प्रजाः।
कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः॥ २४॥

अनित्यं यौवनं रूपं जीवितं द्रव्यसञ्चयः।
आरोग्यं प्रियसंवासो गृध्येदेषु न पण्डितः॥ २५॥
न जानपदिकं दुःखमेकः शोचितुमर्हसि।
अप्यभावेन युज्येत तच्चास्य न निवर्तते॥ २६॥
अशोचन् प्रतिकुर्वीत यदि पश्येत् पराक्रमम्।
भैषज्यमेतद्दुःखस्य यदेतन्नानुचिन्तयेत्॥ २७॥
चिन्त्यमानं हि न व्येति भूयश्चापि प्रवर्धते।
अनिष्टसम्प्रयोगाच्च विप्रयोगात् प्रियस्य च॥ २८॥
मनुष्याः मानुषैर्दुःखैर्युज्यन्ते येऽल्पबुद्धयः।
नार्थो न धर्मो न सुखं यदेतदनुशोचसि॥ २९॥
न च नापैति कार्यार्थात् त्रिवर्गाच्चैव हीयते।
अन्यामन्यां धनावस्थां प्राप्य वैशेषिकीं नराः॥ ३०॥
असन्तुष्टाः प्रमुह्यन्ति सन्तोषं यान्ति पण्डिताः।
प्रज्ञया मानसं दुःखं हन्याच्छारीरमौषधैः॥
एतज्ज्ञानस्य सामर्थ्यं न बालैः समतामियात्॥ ३१॥
शयानञ्चानुशेते हि तिष्ठन्तं चानुतिष्ठति।
अनुधावति धावन्तं कर्म पूर्वकृतं नरम्॥ ३२॥
यस्यां यस्यामवस्थायां यत् करोति शुभाशुभम्।
तस्यां तस्यामवस्थायां तत्फलं समुपाश्नुते॥ ३३॥
येन येन शरीरेण यद् यत् कर्म करोति यः।
तेन तेन शरीरेण तत्तत्फलमुपाश्नुते॥ ३४॥
आत्मैव ह्यात्मनो मित्रमात्मैव रिपुरात्मनः।
आत्मैव ह्यात्मनः साक्षी कृतस्यापकृतस्य च॥ ३५॥
शुभेन कर्मणा सौख्यं दुःखं पापेन कर्मणा।
कृतं लभति सर्वत्र नाकृतं भुज्यते क्वचित्॥ ३६॥
न हि ज्ञानविरुद्धेषु बहुपापेषु कर्मसु।
मूलघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः॥ ३७॥

---

## विदुरस्य सुभाषितानि

आत्मज्ञानं समारम्भस्तितिक्षा धर्मनित्यता।
यमर्था नापकर्षन्ति स वै पण्डित उच्यते॥ १॥
निषेवते प्रशस्तानि निन्दितानि न सेवते।
अनास्तिकः श्रद्दधान एतत् पण्डितलक्षणम्॥ २॥
क्रोधो हर्षश्च दर्पश्च ह्रीः स्तम्भो मान्यमानिता।
यमर्थान्नापकर्षन्ति स वै पण्डित उच्यते॥ ३॥
यस्य कृत्यं न जानन्ति मन्त्रं वा मन्त्रितं परे।
कृतमेवास्य जानन्ति स वै पण्डित उच्यते॥ ४॥
यस्य कृत्यं न विघ्नन्ति शीतमुष्णं भयं रतिः।
समृद्धिरसमृद्धिर्वा स वै पण्डित उच्यते॥ ५॥
यथाशक्ति चिकीर्षन्ति यथाशक्ति च कुर्वते।
न किञ्चिदवमन्यन्ते नराः पण्डितबुद्धयः॥ ६॥
क्षिप्रं विजानाति चिरं शृणोति, विज्ञाय चार्थं भजते न कामात्।
नासंपृष्टो ह्युपयुङ्क्ते परार्थे तत् प्रज्ञानं प्रथमं पण्डितस्य॥ ७॥
नाप्राप्यमभिवाञ्छन्ति नष्टं नेच्छन्ति शोचितुम्।
आपत्सु च न मुह्यन्ति नराः पण्डितबुद्धयः॥ ८॥
निश्चित्य यः प्रक्रमते नान्तर्वसति कर्मणः।
अवन्ध्यकालो वश्यात्मा स वै पण्डित उच्यते॥ ९॥
न हृष्यत्यात्मसम्माने नावमाने च तप्यते।
गाङ्गो ह्रद इवाक्षोभ्यो यः स पण्डित उच्यते॥ १०॥
तत्त्वज्ञः सर्वभूतानां योगज्ञः सर्वकर्मणाम्।
उपायज्ञो मनुष्याणां नरः पण्डित उच्यते॥ ११॥
स्वमर्थं यः परित्यज्य परार्थमनुतिष्ठति।
मिथ्याचरति मित्रार्थे यश्च मूढः स उच्यते॥ १२॥
अमित्रं कुरुते मित्रं मित्रं द्वेष्टि हिनस्ति च।
कर्म चारभते दुष्टं तमाहुर्मूढचेतसम्॥ १३॥

संसारयति कृत्यानि सर्वत्र विचिकित्सते।
चिरं करोति क्षिप्रार्थे स मूढो भरतर्षभ ॥ १४ ॥
एकः क्षमावतां दोषो द्वितीयो नोपपद्यते।
यदेनं क्षमया युक्तमशक्तं मन्यते जनः ॥ १५ ॥
सोऽस्य दोषो न मन्तव्यः क्षमा हि परमं बलम्।
क्षमा गुणो ह्यशक्तानां शक्तानां भूषणं क्षमा ॥ १६ ॥
द्वे कर्मणी नरः कुर्वन्नस्मिन् लोके विरोचते।
अब्रुवन् परुषं किञ्चिदसतो नार्चयंस्तथा ॥ १७ ॥
चत्वारि राज्ञा तु महाबलेन वर्ज्यान्याहुः पण्डितस्तानि विद्यात्।
अल्पप्रज्ञैः सह मन्त्रं न कुर्यान्न दीर्घसूत्रै रभसैश्चारणैश्च ॥ १८ ॥
चत्वारि ते तात गृहे वसन्तु श्रियाभिजुष्टस्य गृहस्थधर्मे।
वृद्धो ज्ञातिरवसन्नः कुलीनः सखा दरिद्रो भगिनी चानपत्या ॥ १९ ॥
पञ्चेन्द्रियस्य मर्त्यस्य छिद्रञ्चेदेकमिन्द्रियम्।
ततोऽस्य श्रवति प्रज्ञा दृतेः पादादिवोदकम् ॥ २० ॥
षडेते ह्यवमन्यन्ते नित्यं पूर्वोपकारिणम्।
आचार्यं शिक्षिताः शिष्याः कृतदाराश्च मातरम् ॥
नारीं विगतमोहाश्च कृतार्थाश्च प्रयोजकम्।
नावं निस्तीर्णकान्तारा आतुराश्च चिकित्सकम् ॥ २१-२२ ॥
आरोग्यमानृण्यमविप्रवासः सद्भिर्मनुष्यैः सह संप्रयोगः।
स्वप्रत्यया वृत्तिरभीतवासः षड्जीवलोकस्य सुखानि राजन् ॥ २३ ॥
ईर्षी घृणी नसन्तुष्टः क्रोधनो नित्यशङ्कितः।
परभाग्योपजीवी च षडेते नित्यदुःखिताः ॥ २४ ॥
सप्त दोषाः सदा राज्ञा हातव्या व्यसनोदयाः।
प्रायशो यैर्विनश्यन्ति कृतमूला अपीश्वराः ॥
स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यञ्च पञ्चमम्।
महच्च दण्डपारुष्यमर्थदूषणमेव च ॥ २५-२६ ॥
दश धर्मं न जानन्ति धृतराष्ट्र निबोध तान्।
मत्तः प्रमत्त उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः ॥

त्वरमाणश्च भीरुश्च लुब्धश्च कामी च ते दश।
तस्मादेतेषु सर्वेषु न प्रसज्जेत पण्डितः॥ २७-२८॥

अनुबन्धानुपेक्षेत सानुबन्धेषु कर्मसु।
संप्रधार्य च कुर्वीत न वेगेन समाचरेत्॥ २९॥
अनुबन्धञ्च संप्रेक्ष्य विपाकञ्चैव कर्मणाम्।
उत्थानमात्मनश्चैव धीरः कुर्वीत वा न वा॥ ३०॥
भक्ष्योत्तमप्रतिच्छन्नं मत्स्यो बडिशमायसम्।
लोभातिपाती ग्रसते नानुबन्धमपेक्षते॥ ३१॥
यच्छक्यं ग्रसितुं ग्रस्यं ग्रस्तं परिणमेच्च यत्।
हितञ्च परिणामे यत्तदाद्यं भूतिमिच्छता॥ ३२॥
वश्येन्द्रियं जितात्मानं धृतदण्डं विकारिषु।
परीक्ष्यकारिणं धीरमत्यन्तं श्रीर्निषेवते॥ ३३॥
धर्मार्थौ यः परित्यज्य स्यादिन्द्रियवशानुगः।
श्रीप्राणधनदारेभ्यः क्षिप्रं स परिहीयते॥ ३४॥
अर्थानामीश्वरो यः स्यादिन्द्रियाणामनीश्वरः।
इन्द्रियाणामनैश्वर्य्याद् भ्रश्यतीह न संशयः॥ ३५॥
यः पञ्चाभ्यन्तरान् शत्रूनविजित्य मनोमयान्।
जिगीषति रिपूनन्यान् रिपवोऽभिभवन्ति तम्॥ ३६॥
हिंसा बलमसाधूनां राज्ञां दण्डविधिर्बलम्।
शुश्रूषा तु बलं स्त्रीणां क्षमा गुणवतां बलम्॥ ३७॥
सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम्॥ ३८॥

भावमिच्छति सर्वस्य नाभावे कुरुते मनः।
सत्यवादी मृदुर्दान्तो यः स उत्तमपूरुषः॥ ३९॥
नानर्थकं सान्त्वयति प्रतिज्ञाय ददाति च।
रन्ध्रं परस्य जानाति यः स मध्यमपूरुषः॥ ४०॥
न श्रद्दधाति कल्याणं परेभ्योऽप्यात्मशङ्कितः।
निराकरोति मित्राणि यो वै सोऽधमपूरुषः॥ ४१॥

———

# कथासरित्सागरः

## जीमूतवाहन-चरितम्*

अस्त्यम्बिकाजनयिता नगेन्द्रो हिमवानिति।
न केवलं गिरीणां यो गुरुर्गौरीपतेरपि ॥१॥
विद्याधरनिवासे च तस्मिन् विद्याधराधिपः।
उवास राजा जीमूतकेतुर्नाम महाचले ॥२॥
तस्याभूत् कल्पवृक्षश्च गृहे पितृक्रमागतः।
नाम्नान्वर्थेन विख्यातो यो मनोरथदायकः ॥३॥
कदाचिच्च स जीमूतकेतू राजाभ्युपेत्य तम्।
उद्याने देवतात्मानं कल्पद्रुममयाचत ॥४॥
"सर्व्वदा प्राप्यतेऽस्माभिस्त्वत्तः सर्व्वमभीप्सितम्।
तदपुत्राय मे देहि देव! पुत्रं गुणान्वितम्" ॥५॥
ततः कल्पद्रुमोऽवादीद्, "राजन्नुत्पत्स्यते तव।
जातिस्मरो दानवीरः सर्व्वभूतहितः सुतः" ॥६॥
तच्छ्रुत्वा स प्रहृष्टः सन् कल्पवृक्षं प्रणम्य तम्।
गत्वा निवेद्य तद्राजा निजां देवीमनन्दयत् ॥७॥
अथ तस्याचिरादेव राज्ञः सूनुरजायत।
जीमूतवाहनं तञ्च नाम्ना स विदधे पिता ॥८॥
ततः सहजया साकं सर्व्वभूतानुकम्पया।
जगाम स महासत्त्वो वृद्धिं जीमूतवाहनः ॥९॥
क्रमाच्च यौवराज्यस्थः परिचर्य्या-प्रसादितम्।
लोकानुकम्पी पितरं विजने स व्यजिज्ञपत् ॥१०॥
"जानामि तात! यद् भावा भवेऽस्मिन् क्षणभङ्गुराः।
स्थिरं तु महतामेकमाकल्पममलं यशः ॥११॥

---

* कथासरित्सागरे—चतुर्थे लम्बके द्वितीये तरङ्गे

परोपकृतिसम्भूतं तदेव यदि, हन्त! तत्।
किमन्यत् स्यादुदाराणां धनं प्राणाधिकप्रियम् ॥१२॥
सम्पच्च विद्युदिव सा लोकलोचनखेदकृत्।
लोला क्वापि लयं याति या परानुपकारिणी ॥१३॥
तदेष कल्पविटपी कामदो योऽस्ति नः स चेत्।
परार्थं विनियुज्येत, तदाप्तं तत् फलं भवेत् ॥१४॥
तत्तथाहं करोमीह यथैतस्य समृद्धिभिः।
अदरिद्रा भवत्येषा सर्व्वार्थिजनसंहतिः" ॥१५॥
इति विज्ञाप्य पितरं तदनुज्ञामवाप्य सः।
जीमूतवाहनो गत्वा तं कल्पद्रुममब्रवीत् ॥१६॥
"देव! त्वं शश्वदस्माकमभीष्टफलदायकः।
तदेकमिदमद्य त्वं मम पूरय वाञ्छितम् ॥१७॥
अदरिद्रां कुरुष्वैतां पृथिवीमखिलां सखे!
स्वस्त्यस्तु ते, प्रदत्तोऽसि लोकाय द्रविणार्थिने" ॥१८॥
इत्युक्तस्तेन धीरेण कल्पवृक्षो ववर्ष सः।
कनकं भूतले भूरि, ननन्दुश्चाखिलाः प्रजाः ॥१९॥
"दयालुर्बोधिसत्त्वांशः कोऽन्यो जीमूतवाहनात्।
शक्नुयादर्थिसात्कर्त्तुमपि कल्पद्रुमं कृती?" ॥२०॥
इति जातानुरागासु ततो दिक्षु विदिक्ष्वपि।
जीमूतवाहनस्योच्चैः पप्रथे विशदं यशः ॥२१॥
ततः पुत्त्रप्रथाबद्धमूलं राज्यं समत्सराः।
दृष्ट्वा जीमूतकेतोस्तद्गोत्रजा विकृतिं ययुः ॥२२॥
दानोपयुक्त-सत्कल्पवृक्षमुक्तास्पदं च तत्।
मेनिरे निष्प्रभावत्वाज्जेतुं सुकरमेव ते ॥२३॥
ततः सम्भूय युद्धाय कृतबुद्धिषु तेषु च।
पितरं तमुवाचैनं धीरो जीमूतवाहनः ॥२४॥
"यथा शरीरमेवेदं जलबुद्बुदसन्निभम्।
प्रवातदीपचपलास्तथा कस्य कृते श्रियः? ॥२५॥

ता अप्यन्योपमर्देन मनस्वी कोऽभिवाञ्छति ?
तस्मात्तात ! मया नैव योद्धव्यं गोत्रजैः सह ॥२६॥
राज्यं त्यक्त्वा तु गन्तव्यमितः क्वापि वनं मया।
आसतां कृपणा एते, मा भूत् स्वकुलसंक्षयः" ॥२७॥
इत्युक्तवन्तं जीमूतवाहनं स पिता ततः।
जीमूतकेतुरप्येवं जगाद कृतनिश्चयः ॥२८॥
"मयापि पुत्र ! गन्तव्यं, का हि वृद्धस्य मे स्पृहा ?
राज्ये तृण इव त्यक्ते यूनापि कृपया त्वया" ॥२९॥
एवमुक्तवता साकं सभार्य्येण "तथे"ति सः।
पित्रा जगाम जीमूतवाहनो मलयाचलम् ॥३०॥
तत्राधिवासे सिद्धानां चन्दनच्छन्ननिर्झरे।
स तस्थावाश्रमपदे परिचर्य्यापरः पितुः ॥३१॥
अथ सिद्धादिराजस्य वशी विश्वावसोः सुतः।
मित्रं मित्रावसुर्नाम तस्यात्र समपद्यत ॥३२॥
तत्स्वसारञ्च सोऽपश्यदेकान्ते जातु कन्यकाम्।
जन्मान्तरप्रियतमां ज्ञानी जीमूतवाहनः ॥३३॥
तत्कालं च तयोस्तुल्यं यूनोरन्योऽन्यदर्शनम्।
अभून्मनोमृगामन्दवागुराबन्धसन्निभम् ॥३४॥
ततोऽकस्मात् समभ्येत्य त्रिजगत्पूज्यमेकदा।
जीमूतवाहनं प्रीतः स मित्रावसुरभ्यधात् ॥३५॥
"कन्या मलयवत्याख्या स्वसा मेऽस्ति कनीयसी।
तामहं ते प्रयच्छामि, ममेच्छां मान्यथा कृथाः" ॥३६॥
तच्छ्रुत्वैव स जीमूतवाहनोऽपि जगाद तम्।
"युवराज ! ममाभूत् सा भार्य्या पूर्व्वेऽपि जन्मनि ॥३७॥
त्वञ्च तत्रैव मे जातो द्वितीयं हृदयं सुहृत्।
जातिस्मरोऽस्म्यहं, सर्व्वं पूर्व्वजन्म स्मरामि तत् ॥३८॥
किन्तु पूर्व्वमितो गत्वा मम पित्रोर्निवेदय।
तयोः प्रमाणीकृतयोः सिध्यत्येतत्तवेप्सितम्" ॥३९॥

इत्थं निशम्य जीमूतवाहनात् प्रीतमानसः।
गत्वा मित्रावसुः सर्व्वं तत्पितृभ्यां शशंस तत् ॥४०॥
अभिनन्दितवाक्यश्च ताभ्यां हृष्टस्तदैव सः।
युवराजो विवाहाय सम्भारमकरोत् स्वसुः ॥४१॥
ततो जग्राह विधिवत्तस्या जीमूतवाहनः।
पाणिं मलयवत्याः स सिद्धराजपुरस्कृतः ॥४२॥
कृतोद्वाहस्ततस्तस्थौ तस्मिन्ञ् जीमूतवाहनः।
मलयाद्रौ महार्हेण विभवेन वधूसखः ॥४३॥
एकदा च श्वशुर्य्येण स मित्रावसुना सह।
वेलावनानि जलधेरवलोकयितुं ययौ ॥४४॥
तत्रापश्यच्च पुरुषं युवानं विग्नमागतम्।
निवर्त्तयन्तं जननीं "हा पुत्रे"ति विराविणीम् ॥४५॥
अपरेण परित्यक्तं भटेनेवानुयायिना।
पुरुषेण पृथूत्तुङ्गं प्रापय्यैकं शिलातलम ॥४६॥
"कस्त्वं? किमीहसे? किञ्च माता त्वां शोचती"ति तम्।
स पप्रच्छ, ततः सोऽपि तस्मै वृत्तान्तमब्रवीत् ॥४७॥
"पुरा कश्यपभार्य्ये द्वे कद्रूश्च विनता तथा।
मिथः कथाप्रसङ्गेन विवादं किल चक्रतुः ॥४८॥
आद्या श्यामान् रवेरश्वानवादीदपरा सितान्।
अन्योऽन्यदासभावञ्च पणमत्र बबन्धतुः ॥४९॥
ततो जयार्थिनी कद्रूः स्वैरं नागैर्निजात्मजैः।
विषफूत्कार-मलिनानर्कस्याश्वानकारयत् ॥५०॥
तादृशांश्चोपदर्श्यैतान् विनतां छद्मना जिताम्।
दासीचकार, कष्टा हि स्त्रीणामन्यासहिष्णुता ॥५१॥
तद् बुद्ध्वागत्य विनतातनयो गरुडस्तदा।
सान्त्वेन मातुर्दासत्वमुक्तिं कद्रूमयाचत ॥५२॥
ततः कद्रूसुता नागा विचिन्त्यैवं तमब्रुवन्।
'भो वैनतेय! क्षीराब्धिः प्रारब्धो मथितुं सुरैः ॥५३॥

ततः सुधां समाहृत्य प्रतिवस्तु प्रयच्छ नः।
मातरं स्वीकुरुष्वाथ भवान् हि बलिनां वरः' ॥५४॥
एतन्नागवचः श्रुत्वा गत्वा च क्षीर-वारिधिम्।
सुधार्थं दर्शयामास गरुडो गुरु पौरुषम् ॥५५॥
ततः पराक्रमप्रीतो देवस्तत्र स्वयं हरिः।
'तुष्टोऽस्मि ते, वरं कञ्चिद् वृणीष्वे'त्यादिदेश तम् ॥५६॥
'नागा भवन्तु मे भक्ष्या' इति सोऽपि हरेस्ततः।
वैनतयो वरं वव्रे मातुर्दास्येन कोपितः ॥५७॥
'तथे'ति हरिणादिष्टो निजवीर्य्यार्जितामृतः।
स चैवमथ शक्रेण गदितो ज्ञातवस्तुना ॥ ५८॥
'तथा पक्षीन्द्र! कार्य्यं ते यथा मूढैर्न भुज्यते।
नागैः सुधा, यथा चैनां तेभ्यः प्रत्याहराम्यहम्' ॥५९॥
एतच्छ्रुत्वा 'तथे'त्युक्त्वा स वैष्णव-वरोद्धुरः।
सुधाकलशमादाय तार्क्ष्यो नागानुपाययौ ॥६०॥
वरप्रभावभीतांश्च मुग्धानाराज्जगाद तान्।
'इदमानीतममृतं, मुक्त्वाम्बां मम गृह्यताम् ॥६१॥
भयञ्चेत् स्थापयाम्येतदहं वो दर्भसंस्तरे।
उन्मोच्याम्बाञ्च गच्छामि, स्वीकुरुध्वमितः सुधाम्' ॥६२॥
'तथे'त्युक्ते च तैर्नागैः स पवित्रे कुशास्तरे।
सुधाकलशमाधत्त, ते चास्य जननीं जहुः ॥६३॥
दास्यमुक्ताञ्च कृत्वैवं मातरं गरुडे गते।
यावदाददते नागा निःशंकास्तत् किलामृतम्।
तावन्निपत्य सहसा तान् विमोह्य स्वशक्तितः।
तं सुधाकलशं शक्रो जहार कुशसंस्तरात् ॥६४-६५॥
विषण्णास्तेऽथ नागास्तं लिलिहुर्दर्भसंस्तरम्।
कदाचिदमृतश्च्योत-लेपोऽप्यस्मिन् भवेदिति ॥६६॥
तेन पाटितजिह्वास्ते वृथा प्रापुर्द्विजिह्वताम्।
हास्यादृते किमन्यत् स्यादतिलौल्यवतां फलम् ॥६७॥

"अथालब्धामृतरसान् नागान् वैरी हरेर्वरात्।
तार्क्ष्यः प्रववृते भोक्तुं तान्निपत्य पुनः पुनः ॥६८॥
तदापाते च पातालं त्रासनिर्जीवराजिलम्।
प्रभ्रष्टगर्भिणीगर्भमभूत् क्षपितपन्नगम् ॥६९॥
तं दृष्ट्वा चान्वहं तत्र वासुकिर्भुवनेश्वरः।
कृत्स्नमेकपदे नष्टं नागलोकममन्यत ॥७०॥
ततो दुर्वारवीर्य्यस्य सद्यस्तस्य विचिन्त्य सः।
समयं प्रार्थनापूर्व्वं चकारैवं गरुत्मतः ॥७१॥
'एकमेकं प्रतिदिनं नागं ते प्रेषयाम्यहम्।
आहारहेतोः पक्षीन्द्र! पयोधि-पुलिनाचले ॥७२॥
पाताले तु प्रवेष्टव्यं न त्वया मर्दकारिणा।
नागलोकक्षयात् स्वार्थस्तवैव हि विनश्यति' ॥७३॥
इति वासुकिना प्रोक्तस्तथेति गरुडोऽन्वहम्।
तत्प्रेषितमिहैकैकं नागं भोक्तुं प्रचक्रमे ॥७४॥
तेन क्रमेण चासंख्याः फणिनोऽत्र क्षयं गताः।
अहञ्च शङ्खचूडाख्यो नागो वारो ममाद्य च ॥७५॥
अतोऽहं गरुडाहारहेतोर्वध्यशिलामिमाम्।
मातुश्च शोच्यतां प्राप्तो नागराजनिदेशतः" ॥७६॥
इति तस्य वचः श्रुत्वा शङ्खचूडस्य दुःखितः।
सान्तःखेदः स जीमूतवाहनस्तमभाषत ॥७७॥
"अहो! किमपि निःसत्त्वं राजत्वं बत वासुकेः।
यत् स्वहस्तेन नीयन्ते रिपोरामिषतां प्रजाः ॥७८॥
किं न प्रथममात्मैव तेन दत्तो गरुत्मते?
क्लीवेनाभ्यर्थिता केयं स्वकुलक्षयसाक्षिता? ॥७९॥
उत्पद्य कश्यपात् पापं तार्क्ष्योऽपि कुरुते कियत्!
देहमात्रकृते मोहः कीदृशो महतामपि! ॥८०॥
तदहं तावदद्यैकं रक्षामि त्वां गरुत्मतः।
स्वशरीरप्रदानेन मा विषादं कृथाः सखे!" ॥८१॥

तच्छ्रुत्वा शङ्खचूडोऽपि धैर्य्यादितदुवाच तम्।
"शान्तमेतन्महासत्त्व! मास्मैवं भाषथाः पुनः ॥८२॥
न काचस्य कृते जातु युक्ता मुक्तामणेः क्षतिः।
न चाप्यहं गमिष्यामि कथां कुलकलङ्किताम्" ॥८३॥
इत्युक्त्वा तं निषिध्यैव साधुर्जीमूतवाहनम्।
मत्वा गरुडवेलाञ्च स क्षणान्तरगामिनीम्।
शङ्खचूडो ययौ तत्र वारिधेस्तीरवर्त्तिनम्।
अन्तकाले नमस्कर्त्तुं गोकर्णाख्यमुमापतिम् ॥ ८४-८५॥
गते तस्मिन् स कारुण्यनिधिर्जीमूतवाहनः।
तत्त्राणायात्मदानेन बुबुधे लब्धमन्तरम् ॥८६॥
ततस्तद् विस्मृतमिव क्षिप्रं कृत्वा स्वयुक्तितः।
कार्य्यापदेशाद् व्यसृजन्निजं मित्रावसुं गृहम् ॥८७॥
तत्क्षणञ्च समासन्न-तार्क्ष्यपक्षानिलाहता।
तत्सत्त्वदर्शनाश्चर्य्यादिव सा भूरघूर्णत ॥८८॥
तेनाहि-रिपुमायान्तं मत्वा जीमूतवाहनः।
परानुकम्पी तां वध्यशिलामध्यारुरोह सः ॥८९॥
क्षणाच्चात्र निपत्यैव महासत्त्वं जहार तम्।
आहत्य चञ्च्वा गरुडः स्वच्छायाच्छादिताम्बरः ॥९०॥
परिस्रवदसृग्धारं च्युतोत्खात-शिखामणिम्।
नीत्वा भक्षयितुं चैनमारेभे शिखरे गिरेः ॥९१॥
तत्कालं पुष्पवृष्टिश्च निपपात नभस्तलात्।
तद्दर्शनाच्च "किं न्वेतदि"ति तार्क्ष्यो विसिष्मिये ॥९२॥
तावत् स शङ्खचूडोऽत्र नत्वा गोकर्णमागतः।
ददर्श रुधिरासारसिक्तं वध्यशिलातलम् ॥९३॥
"हा धिङ् मदर्थे तेनात्मा दत्तो नूनं महात्मना।
तत् कुत्र नीतस्तार्क्ष्येण क्षणेऽस्मिन् स भविष्यति? ॥९४॥
अन्विष्यामि द्रुतं तावत् कदाचित् तमवाप्नुयाम्"।
इति साधुः स तद्रक्तधारामनुसरन् ययौ ॥९५॥

अत्रान्तरे च हृष्टं तं दृष्ट्वा जीमूतवाहनम् ।
गरुडो भक्षणं मुक्त्वा सविस्मयमचिन्तयत् ॥९६॥
"कश्चित् किमन्य एवायं भक्ष्यमाणोऽपि यो मया ।
विपद्यते न तु परं, धीरः प्रत्युत हृष्यति ?" ॥९७॥
इत्यन्तर्विमृशन्तञ्च तार्क्ष्यं तादृग्विधोऽपि सः ।
निजगाद निजाभीष्टसिद्धै जीमूतवाहनः ॥९८॥
"पक्षिराज ! ममास्त्येव शरीरे मांसशोणितम् ।
तदकस्मादतृप्तोऽपि किं निवृत्तोऽसि भक्षणात् ?" ॥९९॥
तच्छ्रुत्वाश्चर्य्यवशगस्तं स पप्रच्छ पक्षिराट् ।
"नागः साधो ! न तावत्त्वं, ब्रूहि तत् को भवानि"ति ॥ १०० ॥
"नाग एवास्मि, भुङ्क्ष्व त्वं यथारब्धं समापय ।
आरब्धा ह्यसमाप्तैव किं धीरैस्त्यज्यते क्रिया ?" ॥१०१॥
इति यावच्च जीमूतवाहनः प्रतिवक्ति तम् ।
तावत् स शङ्खचूडोऽत्र प्राप्तो दूरादभाषत ॥१०२॥
"मा मा गरुत्मन्नैवैष नागो, नागो ह्यहं तव ।
तदेनं मुञ्च, कोऽयं ते जातोऽकाण्डे बत भ्रमः ?"
तच्छ्रुत्वातीव विभ्रान्तो बभूव स खगेश्वरः ।
वाञ्छितासिद्धिखेदञ्च भेजे जीमूतवाहनः ॥१०४॥
ततोऽन्योऽन्य-समालाप-क्रन्दद्विद्याधराधिपम् ।
बुद्ध्वा तं भक्षितं मोहाद् गरुत्मानभ्यतप्यत ॥१०५॥
"अहो बत नृशंसस्य पापमापतितं मम ।
किं वा सुलभपापा हि भवन्त्युन्मार्गवृत्तयः ॥१०६॥
श्लाघ्यस्त्वेष महात्मैकः परार्थ-प्राणदायिना ।
ममेति-मोहैकवशं येन विश्वमधःकृतम्" ॥१०७॥
इति तच्चिन्तयन्तञ्च गरुडं पापशुद्धये ।
वह्निं विविक्षुं जीमूतवाहनोऽथ जगाद सः ॥१०८॥
"पक्षीन्द्र ! किं विषण्णोऽसि ? सत्यं पापाद् बिभेषि चेत् ।
तदिदानीं न भूयस्ते भक्ष्या हीमे भुजङ्गमाः ॥१०९॥

कार्य्यश्चानुशयस्तेषु पूर्व्वभुक्तेषु भोगिषु।
एषोऽत्र हि प्रतीकारो वृथान्यच्चिन्तितं तव" ॥११०॥
इत्युक्तस्तेन स प्रीतस्तार्क्ष्यो भूतानुकम्पिना।
"तथे"ति प्रतिपेदे तद् वाक्यं तस्य गुरोरिव ॥१११॥
ययौ चामृतमानेतुं नाकाज्जीवयितुं जवात्।
क्षताङ्गं तत्र तञ्चान्यानस्थिशेषानहीनपि ॥११२॥
ततश्च साक्षादागत्य देव्या सिक्तोऽमृतेन सः।
जीमूतवाहनो गौर्य्या तद्भार्य्याभक्तितुष्टया ॥११३॥
तेनाधिकतरोद्भूतकान्तीन्यङ्गानि जज्ञिरे।
तस्य सानन्दगीर्वाण-दुन्दुभिध्वनिभिः सह ॥११४॥
ततोऽक्षयेण देहेन यशसा च विराजितम्।
बुद्धाभ्यनन्दत् तं बन्धुजनो जीमूतवाहनम् ॥११५॥
ननन्द तस्य भार्य्या च सज्ञाति-पितरौ तथा।
को न प्रहृष्येद् दुःखेन सुखत्वपरिवर्त्तिना ? ॥११६॥
स्वस्थोत्थिते ततस्तस्मिन्नानीय गरुडो हि तत्।
कृत्स्ने वेलातटेऽप्यत्र ववर्षामृतमम्बरात् ॥११७॥
यन सर्व्वे समुत्तस्थुर्जीवन्तस्तत्र पन्नगाः।
वेलावनं विनिर्मुक्त-वैनतेयभयं ततः ॥११८॥
विसृष्टस्तेन च ययौ शङ्खचूडो निजालयम्।
स्वच्छन्दमविसृष्टञ्च लोकांस्त्रीनपि तद्यशः ॥११९॥

---

# विष्णुपुराणम्

## प्रह्लादचरितम्

पराशर उवाच—

मैत्रेय श्रूयतां सम्यक् चरितं तस्य धीमतः।
प्रह्लादस्य सदोदार-चरितस्य महात्मनः॥१॥
दितेः पुत्रो महावीर्यो हिरण्यकशिपुः पुरा।
त्रैलोक्यं वशमानिन्ये ब्रह्मणो वरदर्पितः॥२॥
इन्द्रत्वमकरोद् दैत्यः स चासीत् सविता स्वयम्।
वायुरग्निरपां नाथः सोमश्चाभून्महासुरः॥३॥
धनानामधिपः सोऽभूत् स एवासीत् स्वयं यमः।
यज्ञभागानशेषांस्तु स स्वयं बुभुजेऽसुरः॥४॥
देवाः स्वर्गं परित्यज्य तत्त्रासान्मुनिसत्तम!
विचेरुरवनौ सर्वे बिभ्राणा मानुषीं तनुम्॥५॥
जित्वा त्रिभुवनं सर्वं त्रैलोक्यैश्वर्यदर्पितः।
उपगीयमानो गन्धर्वैर्बुभुजे विषयान् प्रियान्॥६॥
तस्य पुत्रो महाभागः प्रह्लादो नाम नामतः।
पपाठ बालपाठ्यानि गुरुगृहे गतोऽर्भकः॥७॥
एकदा तु स धर्मात्मा जगाम गुरुणा सह।
पानासक्तस्य पुरतः पितुर्दैत्यपतेस्तदा॥८॥
पादप्रणामावनतं तमुत्थाप्य पिता सुतम्।
हिरण्यकशिपुः प्राह प्रह्लादममितौजसम्॥९॥

हिरण्यकशिपुरुवाच—

पठ्यतां भवता वत्स सारभूतं सुभाषितम्।
कालेनैतावता यत् ते सदोद्युक्तेन शिक्षितम्॥१०॥

प्रह्लाद उवाच—

श्रूयतां तात वक्ष्यामि सारभूतं तवाज्ञया।
समाहितमना भूत्वा यन्मे चेतस्यवस्थितम् ॥११॥
अनादिमध्यान्तमजमवृद्धिक्षयमच्युतम्।
प्रणतोऽस्मि महात्मानं सर्वकारणकारणम् ॥१२॥

पराशर उवाच—

एवं निशम्य दैत्येन्द्रः क्रोधसंरक्तलोचनः।
विलोक्य तद्गुरुं प्राह स्फुरिताधरपल्लवः ॥१३॥

हिरण्यकशिपुरुवाच—

ब्रह्मबन्धो किमेतत् ते विपक्षस्तुतिसंहितम्।
असारं ग्राहितो बालो मामवज्ञाय दुर्मते!। ॥१४॥

गुरुरुवाच—

दैत्येश्वर, न कोपस्य वशमागन्तुमर्हसि।
ममोपदेशजनितं नायं वदति ते सुतः ॥१५॥

हिरण्यकशिपुरुवाच—

अनुशिष्टोऽसि केनेदृग् वत्स प्रह्लाद कथ्यताम्।
ममोपदिष्टं नेत्येष प्रब्रवीति गुरुस्तव ॥१६॥

प्रह्लाद उवाच—

शास्ता विष्णुरशेषस्य जगतो यो हृदि स्थितः।
तमृते परमात्मानं तात कः केन शास्यते? ॥१७॥

हिरण्यकशिपुरुवाच—

कोऽयं विष्णुः सुदुर्बुद्धे यं ब्रवीषि पुनः पुनः।
जगतामीश्वरस्येह पुरतः प्रसभं मम? ॥१८॥

प्रह्लाद उवाच—

न शब्दगोचरे यस्य योगिध्येयं परम् पदम्।
यतो यश्च स्वयं विश्वं स विष्णुः परमेश्वरः ॥१९॥

हिरण्यकशिपुरुवाच—

परमेश्वरसंज्ञोऽज्ञ किमन्यो मय्यवस्थिते।
तवास्ति मर्तुकामस्त्वं प्रब्रवीषि पुनः पुनः॥२०॥

प्रह्लाद उवाच—

न केवलं तात मम प्रजानां
स ब्रह्मभूतो भवतश्च विष्णुः।
धाता विधाता परमेश्वरश्च
प्रसीद, कोपं कुरुषे किमर्थम्? ॥२१॥

हिरण्यकशिपुरुवाच—

प्रविष्टः कोऽस्य हृदये दुर्बुद्धेरतिपापकृत्।
येनेदृशान्यसाधूनि वदत्याविष्टमानसः? ॥२२॥

प्रह्लाद उवाच—

न केवलं मद्हृदयं स विष्णु-
राक्रम्य लोकान् सकलानवस्थितः।
स मां त्वदादींश्च पितः समस्तान्
समस्तचेष्टासु युनक्ति सर्व्वगः॥२३॥

हिरण्यकशिपुरुवाच—

दुरात्मा वध्यतामेष नानेनार्थोऽस्ति जीवता।
स्वपक्षहानिकर्तृत्वाद् यः कुलाङ्गारतां गतः॥२४॥

पराशर उवाच—

इत्याज्ञप्तास्ततस्तेन प्रगृहीत-महायुधाः।
उद्यतास्तस्य नाशाय दैत्याः शतसहस्रशः॥२५॥

प्रह्लाद उवाच—

विष्णुः शस्त्रेषु युष्माकं मयि चासौ तथा स्थितः।
दैतेयास्तेन सत्येन न क्राम्यन्त्वायुधानि मे॥२६॥

पराशर उवाच—

ततस्तैः शतशो दैत्यैः शस्त्रौघैराहतोऽपि सन्।
नावाप वेदनामल्पामभूच्चैव पुनर्नवः॥२७॥

हिरण्यकशिपुरुवाच—

दुर्बुद्धे विनिवर्त्तस्व वैरिपक्षस्तवादतः।
अभयं ते प्रयच्छामि मातिमूढमतिर्भव॥२८॥

प्रह्लाद उवाच—

भयं भयानामपहारिणि स्थिते
मनस्यनन्ते मम कुत्र तिष्ठति ?
यस्मिन् स्मृते जन्मजरान्तकादि-
भयानि सर्वाण्यपयान्ति तात ! ॥२९॥

हिरण्यकशिपुरुवाच—

भो भोः सर्पा दुराचारमेनमत्यन्तदुर्मतिम्।
विषज्वालाकुलैर्वक्त्रैः सद्यो नयत संक्षयम्॥३०॥

पराशर उवाच—

इत्युक्तास्तेन ते सर्पाः कुहकास्तक्षकान्वकाः।
अदशन्त समस्तेषु गात्रेष्वतिविषोल्वणाः॥३१॥

स त्वासक्तमतिः कृष्णे दश्यमानो महोरगैः।
न विवेदात्मनो गात्रं तत्स्मृत्याह्लादसंस्थितः॥३२॥

सर्पा ऊचुः—

दंष्ट्रा विशीर्णा मणयः स्फुटन्ति
फणेषु तापो हृदयेषु कम्पः।
नास्य त्वचः स्वल्पमपीह भिन्न-
म्प्रशाधि दैत्येश्वर कार्यमन्यत्॥३३॥

हिरण्यकशिपुरुवाच—

हे दिग्गजाः सङ्कटदन्तमिश्रा
घ्नतैनमस्मद्रिपुपक्षभिन्नम्।
तज्जा विनाशाय भवन्ति तस्य
यथारणेः प्रज्वलिता हुताशाः॥३४॥

पराशर उवाच—

ततः स दिग्गजैर्बालो भूभृच्छिखरसन्निभैः।
पातितो धरणीपृष्ठे विषाणैरवपीडितः॥३५॥

स्मरतस्तस्य गोविन्दमिभदन्ताः सहस्रशः।
शीर्णा वक्षःस्थलं प्राप्य स प्राह पितरं ततः॥३६॥

दन्ता गजानां कुलिशाग्रनिष्ठुराः
शीर्णा यदेते न बलं ममैतत्।
महाविपत्पापविनाशनोऽयं
जनार्दनानुस्मरणानुभावः॥३७॥

हिरण्यकशिपुरुवाच—

ज्वाल्यतामसुरा वह्निरपसर्पत दिग्गजाः।
वायो समेधयाग्निं त्वं दह्यतामेष पापकृत्॥३८॥

पराशर उवाच—

महाकाष्ठचयच्छन्नमसुरेन्द्रसुतं ततः।
प्रज्वाल्य दानवा वह्निं ददहुः स्वामिनोदिताः॥३९॥

प्रह्लाद उवाच—

तातैष वह्निः पवनेरितोऽपि
न मां दहत्यत्र समन्ततोऽहम्।
पश्यामि पद्मास्तरणास्तृतानि
शीतानि सर्वाणि दिशां मुखानि॥४०॥

पुरोहिता ऊचु:—

राजन् नियम्यतां कोपो बालेऽत्र तनये निजे।
कोपो देवनिकायेषु यत्र ते सफलो यतः ॥४१॥
तथा तथैनं बालं ते शासितारो वयं नृप!
यथा विपक्षनाशाय विनीतस्ते भविष्यति ॥४२॥
बालत्वं सर्वदोषाणां दैत्यराजास्पदं यतः।
ततोऽत्र कोपमत्यर्थं योक्तुमर्हसि नार्भके ॥४३॥
न त्यक्ष्यति हरेः पक्षमस्माकं वचनाद् यदि।
ततः कृत्यां वधायास्य करिष्यामोऽनिवर्तिनीम् ॥४४॥

पराशर उवाच—

एवमभ्यर्थितस्तैस्तु दैत्यराजः पुरोहितैः।
दैत्यैर्निष्काशयामास पुत्रं पावकसञ्चयात् ॥४५॥
ततो गुरुगृहे बालः स वसन् बालदानवान्।
अध्यापयामास मुहुरुपदेशान्तरे गुरोः ॥४६॥

प्रह्लाद उवाच—

श्रूयतां परमार्थो मे दैतेया दितिजात्मजाः।
न चान्यथैतन्मन्तव्यं नात्र लोभादिकारणम् ॥४७॥
यावतः कुरुते जन्तुः सम्बन्धान् मनसः प्रियाम्।
तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः ॥४८॥

असारसंसार-विवर्तनेषु
मा यात तोषं प्रसभं ब्रवीमि।
सर्वत्र दैत्याः समतामुपेत
समत्वमाराधनमच्युतस्य ॥४९॥
तस्मिन् प्रसन्ने किमिहास्त्यलभ्यं
धर्मार्थकामैरलमल्पकास्ते।
समाश्रिताद् ब्रह्मतरोरनन्ता
न्निःसंशयं प्राप्स्यथ वै महत् फलम् ॥५०॥

पराशर उवाच—

तस्यैवं दानवाश्चेष्टां दृष्ट्वा दैत्यपतेर्भयात्।
आचचक्षुः स चोवाच सूदानाहूय सत्वरः ॥५१॥

हिरण्यकशिपुरुवाच—

हे सूदा मम पुत्रोऽसावन्येषामपि दुर्मतिः।
कुमार्गदेशको दुष्टो हन्यतामविलम्बितम् ॥५२॥
हलाहलविषं तस्य सर्वभक्ष्येषु दीयताम्।
अविज्ञातमसौ पापो हन्यतां मा विचार्यताम् ॥५३॥

पराशर उवाच—

ते तथैव ततश्चक्रुः प्रह्लादाय महात्मने।
विषदानं यथाज्ञप्तं पित्रा तस्य महात्मनः ॥५४॥
हालाहलं विषं घोरमनन्तोच्चारणेन सः।
अभिमन्त्र्य सहान्नेन मैत्रेय बुभुजे तदा ॥५५॥
अविकारं स तद् भुक्त्वा प्रह्लादः स्वस्थमानसः।
अनन्तख्यातिनिर्वीर्यं जरयामास तद्विषम् ॥५६॥
ततस्तदा भयत्रस्ता जीर्णं दृष्ट्वा महद्विषम्।
दैत्येश्वरमुपागम्य प्रणिपत्येदमब्रुवन् ॥५७॥

सूदा ऊचुः—

दैत्यराज विषं दत्तमस्माभिरतिभीषणम्।
जीर्णं तेन सहान्नेन प्रह्लादेन सुतेन ते ॥५८॥

हिरण्यकशिपुरुवाच—

त्वर्यतां त्वर्यतां हे हे सद्यो दैत्यपुरोहिताः।
कृत्यां तस्य विनाशाय उत्पादयत मा चिरात् ॥५९॥

पराशर उवाच—

सकाशमागम्य ततः प्रह्लादस्य पुरोहिताः।
सामपूर्वमथोचुस्ते प्रह्लादं विनयान्वितम् ॥६०॥

पुरोहिता ऊचुः—

जातस्त्रैलोक्यविख्याते आयुष्मन् ब्रह्मणः कुले।
दैत्यराजस्य तनयो हिरण्यकशिपोर्भवान् ॥६१॥
किं देवैः किमनन्तेन किमन्येन तवाश्रयः।
पिता ते सर्वलोकानां त्वं तथैव भविष्यसि ॥६२॥
तस्मात् परित्यजैनां त्वं विपक्षस्तवसंहिताम्।
वाचं, पिता समस्तानां गुरूणां परमो गुरुः ॥६३॥

प्रह्लाद उवाच—

एवमेतन्महाभागाः श्लाघ्यमेतन्महाकुलम्।
मरीचेः सकलेऽप्यस्मिन् त्रैलोक्ये कोऽन्यथा वदेत्? ॥६४॥
पिता च मम सर्वस्मिन् जगत्युत्कृष्टचेष्टितः।
एतदप्यवगच्छामि सत्यमत्रापि नानृतम् ॥६५॥
गुरूणामपि सर्वेषां पिता परमको गुरुः।
यदुक्तं भ्रान्तिरत्रापि स्वल्पापि हि न विद्यते ॥६६॥
पिता गुरुर्न सन्देहः पूजनीयः प्रयत्नतः।
तत्रापि नापराध्यामीत्येवं मनसि मे स्थितम् ॥६७॥
यदेतत् किमनन्तेनेत्युक्तं युष्माभिरीदृशम्।
को ब्रवीति यथायुक्तं किन्तु नैतद् वचोऽर्थवत् ॥६८॥
इत्युक्त्वा सोऽभवन्मौनी तेषां गौरवयन्त्रितः।
प्रहस्य च पुनः प्राह किमनन्तेन साध्विति ॥६९॥

पुरोहिता ऊचुः—

यदास्मद्वचनान्मोहग्राहं न त्यक्ष्यते भवान्।
ततः कृत्यां विनाशाय तव स्रक्ष्याम दुर्म्मते! ॥७०॥

प्रह्लाद उवाच—

कः केन हन्यते जन्तुर्जन्तुः कः केन रक्ष्यते।
हन्ति रक्षति चैवात्मा ह्यसत्-साधु समाचरन् ॥७१॥

पराशर उवाच—

इत्युक्तास्तेन ते क्रुद्धा दैत्यराजपुरोहिताः।
कृत्यामुत्पादयामासुर्ज्वालामालोज्ज्वलाकृतिम् ॥७२॥
अतिभीमा समागम्य पादन्यासक्षतक्षितिः।
शूलेन सा सुसंक्रुद्धा तं जघानाशु वक्षसि ॥७३॥
तत् तस्य हृदयं प्राप्य शूलं बालस्य दीप्तिमत्।
जगाम खण्डितं भूमौ तत्रापि शतधा गतम् ॥७४॥
यत्रानपायी भगवान् हृद्यास्ते हरिरीश्वरः।
भङ्गो भवति वज्रस्य ततः शूलस्य का कथा! ॥७५॥
अपापे तत्र पापैश्च पातिता तत्र याजकैः।
तानेव सा जघानाशु कृत्वा नाशं जगाम च ॥७६॥
कृत्यया दह्यमानांस्तान् विलोक्य स महामतिः।
त्राहि कृष्णेत्यनन्तेति वदन्नभ्यवपद्यत ॥७७॥

प्रह्लाद उवाच—

सर्व्वव्यापिन् जगद्रूप जगत्स्रष्टर्जनार्दन!
पाहि विप्रानिमानस्माद् दुःसहान्मन्त्रपावकात् ॥७८॥
यथा सर्वेषु भूतेषु सर्वव्यापी जगद्गुरुः।
विष्णुरेव तथा सर्वे जीवन्त्वेते पुरोहिताः ॥७९॥

पराशर उवाच—

इत्युक्तास्तेन ते सर्वे संस्पृष्टाश्च निरामयाः।
समुत्तस्थुर्द्विजा भूयस्तञ्चोचुः प्रश्रयान्वितम् ॥८०॥

पुरोहिता ऊचुः—

दीर्घायुरप्रतिहतबल-वीर्यसमन्वितः।
पुत्रपौत्रधनैश्वर्ययुक्तो वत्स भवोत्तम! ॥८१॥

पराशर उवाच—

इत्युक्त्वा तं ततो गत्वा यथावृत्तं पुरोहिताः।
दैत्यराजाय सकलमाचचक्षुर्महामुने! ८२॥

———